THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

*No. 15*

(Part II)



—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA



THE

# TRIPURĀ RAHASYA

## ( JÑĀNA KHAṆḌA )



*Printed by Jai Krishna das Gupta*

*At the Vidya Vilas Press, Gopal Mandir Lane,*

*Benares City.*

1927

सटीकं

# त्रिपुरारहस्यम्

( ज्ञानखण्डम् )



The

# TRIPURĀRAHASYA

( JÑĀNA KHAṆḌA )

With Commentary




Edited with Introduction

BY


GOPI NATH KAVIRAJ, M. A.,

Principal, Government Sanskrit College Benares.

and

Nārāyaṇa S'āstrī Khiste Sāhītyāchārya

Assistant Librarian, Saraswati Bhawan, Benares.





1927

अश्रद्धस्तरुणः पत्न्यां कथं स सुखमेधते ।
तथापत्येषु स्थविरः कथमियात् सतीं गतिम् ॥ २६ ॥
अश्रद्धो वा भुवं कस्माद् विकर्षेत् कर्षकः किल ।
न प्रवृत्तिर्भवेत् क्वापि त्यागे वा सङ्ग्रहेऽपि वा ॥२७॥
श्रद्धावैधुर्ययोगेन विनश्येज्जगतां स्थितिः ।
एकान्तग्रहणाल्लोकप्रवृत्तिरिति चेच्छृणु ॥ २८ ॥
एकान्तग्रहणे वापि श्रद्धा कस्मात् प्रतिष्ठिता ।

---

मयि निद्रिते मामियं न हन्येदिति पत्न्यां श्रद्धामकुर्वतो विपरीत-सम्भावनोदयात् सुखं न स्यात् । एवं स्थाविरोऽपि । सतीं गतिं सुखस्थितिम् ॥ २६ ॥ अश्रद्धस्य न क्वापि प्रवृत्तिः स्यात् इष्टसाधनत्वनिश्चयासम्भवादित्याह—अश्रद्ध इति ॥ २७ ॥ प्रवृत्त्यभावे इष्टापत्तिरिति चेन्नैवमित्याह—श्रद्धेति । श्रद्धावैधुर्यं श्रद्धाभावः तद्योगेन तत्सत्त्वेन हेतुना प्रवृत्त्यभावे साधिते सति इति शेषः । जगतां प्राणिनां स्थितिः सुखाद्यनुभवात्मा व्यवहारः । नश्येन्नाशः सम्भवेत् । प्रत्यक्षसिद्धा जगत्स्थितिरपह्नोतुं न शक्या । अतस्तन्मूलभूतश्रद्धासिद्धिरिति भावः । ननु न जगत्स्थितिनिमित्तप्रवृत्त्यन्यथानुपपत्त्या श्रद्धासिद्धिः प्रवृत्तेरन्यथासिद्धेरित्याह—एकान्तेति । एकान्तग्रहणात् व्याप्तिग्रहादित्यर्थः । कर्षकः भूविकर्षणे कृतेऽकृते च धान्यप्राप्तिमप्राप्तिञ्च भूयो गृहीत्वा कर्षणव्याप्तिं धान्यप्राप्तौ विनिश्चित्य कर्षणे प्रवर्त्तते न श्रद्धया प्रवर्त्तत इति भावः । अत्राह—शृण्विति ॥२८॥ श्रद्धा नाम सम्भावनात्मा निश्चयः इदमित्थमेव स्यादिति । एवं सति एकान्तग्रहणे वा श्रद्धा तव कथं प्रतिष्ठिता स्थिता ।श्रद्धा-

तत्राप्येकान्तशरणः श्रद्धाशरण एव हि ॥ २९ ॥
तस्माच्छ्रद्धामृते लोकोऽवसीदेदश्वसन् ध्रुवम् ।
तस्माच्छ्रद्धां दृढां प्राप्य सुखमात्यन्तिकं व्रज ॥३०॥
श्रद्धाऽवरे न कार्येति मन्यसे यदि तच्छृणु ।
इयश्च श्रद्धयैवास्ते प्रवृत्तिर्नृपतेः सुत ॥ ३१ ॥
तत् कथं ते प्रवृत्तिः स्यादिति श्रुत्वा प्रियावचः ।
हेमचूडः प्राह पुनः प्रियां कुशलभाषिणीम् ॥ ३२ ॥
नूनं प्रिये सर्वथैव श्रद्धातव्यं यदा भवेत् ।



मपन्हुवानस्य तव केषुचित् स्थानेषु कार्यकारणयोः साहचर्यानुभवमात्रेण परोक्षे भाविकार्येऽपि कारणसाहचर्यसम्भावना कुत इत्यभिप्रायः । यद्वा सुखाद्यनुभवरूपफलादपन्होतुमशक्यात् प्रवृत्तिः सिद्धा । सिद्धायां प्रवृत्तौ श्रद्धामूलकत्वं न भवेदेकान्तग्रहणमूलकत्वमेव भवेदिति वा श्रद्धा कुत इति । तत्रापीति । एकान्तग्रहणात् प्रवृत्तिरिति स्वीकारेऽपि । एवं सत्यपि श्रद्धा त्वयाभ्युपगतेति भावः ॥ २९ ॥ यस्माच्छ्रद्धां विना प्रवृत्तिर्न घटते तस्मात् । श्रद्धामृते प्रवृत्त्यभावाल्लोकव्यवहारो नश्येत् । अश्वसन्निति । उच्छ्वासनिश्वासयोस्तन्निरोधे च संशयादप्रवृत्तिः स्यादिति तात्पर्यम् । यस्माच्छ्रद्धां विना व्यावहारिकमपि सुखं न भवेत्तस्मात् । मदुक्तौ श्रद्धां प्राप्य ॥ ३० ॥ ननु श्रद्धा विद्वद्वचनेषु कार्या नावरे निकृष्टे स्त्रीमूढादिवचने इति तदाक्षेपमनूद्य परिहरति–श्रद्धेति । इयमिति । अवरे श्रद्धा न कर्त्तव्येत्यभ्युपगमरूपा प्रवृत्तिरपि श्रद्धयैव भवेदिति भावः ॥ ३१ ॥ ॥ ३२ ॥ यदि श्रद्धा न स्यात्तदा मोक्षाभ्युपगमरूपा प्रवृत्तिः

श्रद्धा सत्सु विधातव्या यथा श्रेयः समाप्नुयात् ३३
असत्सु नो विधातव्या श्रद्धा श्रेयोऽभिवाञ्छिना ।
अन्यथान्तः सुनिशिते कुटिले बडिशे यथा ॥ ३४ ॥
बहिः समे सुपिष्टेन मीनानां नाशमाप्नुयात् ।
तस्मात् सत्स्वेव कर्त्तव्या श्रद्धा नासत्सु कुत्रचित ३५
असत्सु कृत्वा श्रद्धां ये नाशमीयुः परेऽपि च ।
सत्सु श्रेयोयुजः श्रद्धावशातस्ते निदर्शनम् ॥ ३६ ॥
अतः प्रतीत्यैव युक्ता कर्त्तुं श्रद्धा न चान्यथा ।
तत् कथं ते प्रवृत्तिः स्यादिति प्रश्नः कथं तव ॥ ३७ ॥
इत्युक्ता हेमलेखा सा पुनराह पतिं प्रियम् ।
शृणु राजकुमारेदं प्रोच्यमानं मया वचः ॥ ३८ ॥
यदात्थ त्वं कथं प्रश्न इति तत्र ब्रवीमि ते ।

---

कथं स्यादित्याह—तदिति । सर्वथा । वरावरत्वविचारं विना । तदा श्रद्धा सत्स्वित्यादि महाजनोक्तवत् मीनानामिव नाशमाप्नुयादिति व्यवहितेन सम्बन्धः ॥ ३३ ॥ ३४ ॥ अन्यथा असति बडिशे । श्रद्धया मीना यं नाशमाप्नुयुः तं नाशमाप्नुयात् । यतोऽसति श्रद्धया नाशः तस्मात् ॥ ३५ ॥ ये मीना इवासत्सु श्रद्धया नष्टाः ये च सत्सु श्रद्धया श्रेयोयुक्तास्ते सर्वे मदुक्तौ निदर्शनम् उदाहरणम् ॥ ३६॥ सादिति प्रतीत्या ज्ञात्वैव श्रद्धा कर्त्तुं युक्ता । एवं सति तत् कथं ते प्रवृत्तिरिति प्राक्कृतः प्रश्न आक्षेपः कथम् । न सर्वथाहं श्रद्धाप्रतिषेधपरः सत्सु श्रद्धा कार्या नान्यत्रेति सतां महाजनानां वाक्यादेवमहं प्रवृत्त इति भावः ॥ ३७ ॥ ३८ ॥ सत्सु श्रद्धा कार्येति यद्वाक्ये तव श्रद्धा

अथ सन् वा ह्यसन् वायमिति ते निश्चयः कुतः॥३९॥
सत्यस्मिन् निश्चये भूयाच्छुभं सच्छ्रद्धयेह वै।
सोऽपि लक्षणतः स्याच्चेच्छ्रद्धा लक्षणसङ्गता ॥ ४० ॥
प्रमाणाल्लक्षणज्ञानमिति चेत्तत्र संशृणु।
अश्रद्धस्य प्रमाणं किं भवेत्तत् सुनिरूप्यताम् ॥४१॥
अन्यथा हि प्रमाता नोऽविसंवाद्येत कुत्रचित्।
तस्माच्छ्रद्धां समाश्रित्य लोकः सर्वः प्रवर्त्तते ॥४२॥

---

सोऽयं पुरुषः सन्नेवेति कथं ते निश्चयः ॥ ३९ ॥ अन्यवाक्येनेति चेदनवस्थेत्यभिप्रेत्याह—सत्यस्मिन्निति। अयं निश्चय एव न घटत इति तात्पर्यम्। सोऽपि। सन्निति। निश्चयोऽपि। लक्षणतः असद्व्यावृत्तिधर्मेण। श्रद्धेति। इदमस्य लक्षणमित्यन्यवाक्येनेदं लक्षणज्ञानं भवितव्यं चेदनवस्था तदवस्थैवेति भावः ॥४०॥ प्रमाणादिति। अन्वयव्यतिरेकाभ्यामित्यर्थः। अश्रद्धस्य प्रमाणं किमिति। अयमाशयः। परे ह्यागमे श्रद्धयैव प्रवृत्तिरुपपद्यते न शुष्कतर्केण। पार्थिवत्वलोहलेख्यत्वयोः सहचारस्य भूयो गृहीतत्वेऽपि हीरके व्यभिचारदर्शनान्न केवलतर्केण किञ्चिज्ज्ञातुं शक्यते इति ॥ ४१ ॥ तस्मात् पुरुषार्थसाधनप्रवर्त्तकमविसंवादिप्रमाणमागमान्नान्यादित्याह—अन्यथेति। सदागमस्यैवान्यप्रमाणानामपि दृष्टत्वाभावसम्भावनया सर्वथाऽविसंवादकत्वे प्रवृत्तः प्रमाता न क्वापि विसंवाद्येत प्रवृत्त्युद्दिष्टफलाप्राप्त्या परिभूयेत। यस्मादन्यप्रमाणानां विसंवादकत्वसम्भावना तस्मात्। सदागमे श्रद्धामाश्रित्यैव कृषीवलोऽपि आगमाश्रयेण सुमुहूर्त्तविघ्ननिरसनादिपूर्वकं प्रवर्त्तते। तत्र च दृश्यमानः क्वाचिद्विसं-

तत्प्रकारं प्रवक्ष्यामि शृणु निश्चलचेतसा ।
अनवस्थिततर्को वा ह्यतर्को वापि सर्वथा ॥४३॥
श्रेयो न प्राप्नुयाल्लोक इह वापि परत्र वा ।
तत्रातर्कस्य कालेन भवेच्छ्रेयः कदाचन ॥ ४४ ॥
अनवस्थिततर्कस्य न श्रेयः स्यात् कथञ्चन ।
पुरा सह्यगिरौ गोदावरीतीरे हि कौशिकः ॥ ४५ ॥
न्यवसच्छान्तसुमतिर्ज्ञातलोकः सतत्त्वकः ।
तस्य शिष्यास्तु शतशः स्थिता गुरुसमाश्रयात् ॥४६॥
त एकदा गुरुमनुगता लोकस्य संस्थितिम् ।
निर्णेतुं बुद्ध्यनुगुणं तदा प्रोचुः परस्परम् ॥ ४७ ॥

---

वादो न प्रमाणदोषकृतः किन्तु सामग्रीवैकल्यकृत एव । अतएव तस्यैव तत्रैव भूयः सामग्रीसाकल्यसम्पादनाभिमानेन प्रवृत्तिरुपपद्यत इति भावः ॥ ४२ ॥ तत् प्रकारं श्रद्धया श्रेयःप्राप्तिप्रकारम् । अनवस्थिततर्कः शुष्कतर्कवान् । अतर्को मूढः ॥ ४३ ॥ श्रेयो नेति । आद्यस्यानाश्वासेनाप्रवृत्तेः । द्वितीयस्य सामग्रीवैकल्यसम्भवात् । अन्धप्रक्षिप्तलोष्टाघातेन फलपातवद्द्वितीयस्य श्रेयः कदाचित् सम्भाव्येत इत्याह–तत्रेति । तयोर्मध्ये इत्यर्थः ॥ ४४ ॥ अनवस्थिततर्कस्य श्रेयो न कथञ्चिदित्यत्रेतिहासमाह–पुरेति ॥ ४५ ॥ शान्तश्चासौ सुमतिश्च । कामाद्यनाहतस्वभावः श्रद्धाभक्तिप्रचुरमतिश्च । अतएव ज्ञातलोकसतत्त्वकः । लोक्यते दृश्यते इति लोको दृश्यम् । दृश्यस्य हि परं तत्त्वं यत्प्रकाशः परः शिव इत्यागमरीत्या अधिष्ठानप्रकाशमात्रं सतत्त्वं स्वरूपं ज्ञातं येन ॥ ४६ ॥ ते शिष्याः ।

तत्राजगाम शुङ्गाख्यो विप्रः कश्चिन्महाबुधः ।
स सर्वेषां मतं प्रोक्तं दूषयद्बुद्धिकौशलात् ॥ ४८ ॥
अश्रद्धया हतप्रज्ञो विवादनिपुणस्तदा ।
प्रमाणात् प्रमितं सत्यमित्युक्तेषु द्विजेष्वथ ॥ ४९ ॥
अनवास्थिततर्को वै प्राह तर्कैकसंश्रयः ।
शुङ्गाख्य आक्षिपन् सर्वान् तत्र वादकथान्तरे ॥५०॥
विप्राः शृणुध्वं मद्वाक्यं सत्यं न क्वापि सिध्यति ।
प्रमितं यत् प्रमाणेन तत् सत्यमिति हीरितम् ॥५१॥

---

गुरुमनु पश्चात् । गुरोः परोक्ष इति यावत् । लोकस्य स्थितिं निर्णेतुं गताः सङ्गताः सन्तः तदा तन्निर्णयाय स्वबुद्ध्यनुगुणं यथा तथा परस्परं प्रोचुः ॥ ४७ ॥ तत्र कौशिकशिष्यसमाजे । महाबुधः शुष्कतर्कनिपुणः । यद्वा महांश्चासावबुधश्च अज्ञातलोकसतत्त्व इति भावः । सः शुङ्गः । सर्वेषां कौशिकशिष्याणाम् । बुद्धिकौशलात् । नागमानुरुद्धयुक्त्याऽदूषयत् किन्तु केवलं बुद्धिकौशलात् शुष्कतर्कैरिति भावः ॥ ४८ ॥ कुतस्तस्यागमानादर इति चेदाह–अश्रद्धयेति । अतएव विवादनिपुणः सन् वितण्डामाश्रित्येति यावत् । तदा कौशिकशिष्याणां दृश्यतत्त्वनिर्णयोपयुक्तकथाकाले । निर्दुष्टप्रमाणप्रमितं सत्यमिति तेषूक्तेषु । अथाहेत्यन्वयः ॥ ४९ ॥ अनवास्थिततर्कः शुङ्गाख्यः । शुष्कतर्काश्रयः । वादकथान्तरे । जल्पवितण्डाभिन्नकथामध्ये ॥ ५० ॥ शुङ्गवाक्यं विप्रा इत्यादि । भवद्भिर्यत् साध्यते सत्यं न तत् क्वापि कालत्रयेऽपि सिध्यतीत्याक्षेपः । प्रमितमित्यादिकौशिकशिष्यमतानुवादः । इति हि भवद्भिरीरितम् ॥ ५१ ॥

तत्र तेन दोषयुजा भवेदप्रमितं ननु ।
निश्चेतव्या ततस्त्वादौ प्रमाणानामदुष्टता ॥ ५२ ॥
सा प्रमाणान्तरकृता तत्राप्येवं विचिन्त्यताम् ।
इत्येवमनवस्थानात् न किञ्चित् प्रमितं भवेत् ॥ ५३ ॥
अतः प्रमाता प्रमितं प्रमाणं वा न सिध्यति ।
तस्माच्छून्याश्रयो ह्येष विकल्पो विविधः स्थितः ॥५४॥
सोऽपि शून्यात्मतां प्राप्तः प्रमाणाविषयत्वतः ।

—— ——

तत्र प्रमाणेषु मध्ये दोषयुक्तप्रमाणेन भातमप्रमितमसत्यं ननु । अत आदौ सत्यासत्यपरीक्षकेण प्रमाणानामदुष्टता निश्चेतव्येत्याह–निश्चेतव्येति । नहि भासनमात्रेण सत्यत्वं कस्यचित् शुक्तिरजतादेः सत्यत्वप्रसङ्गात् । अतः अदुष्टप्रमाणप्रमितस्यैव सत्यत्वात् प्रमाणादुष्टत्वनिश्चयाधीन एव भावसत्यत्वनिश्चय इति भावः ॥ ५२ ॥ प्रमाणादुष्टत्वनिश्चयोऽपि प्रमाणान्तराधीन इत्यनवस्थया मूलक्षतिकर्या न क्वचित् सत्यत्वं सिध्यतीत्याह–सप्रमाणेति ॥ ५३ ॥ अतः प्रमाणादुष्टत्वानिश्चयात् । प्रमितं दृश्यम् । सत्यं न सिध्यति । तस्मात् सत्यत्वासिद्धेः । अहमिदं चक्षुषा पश्यामीत्यादि विविधो विकल्पः शून्यालम्बन एव । न चानुमानादिप्रमाणैरभिमतसिद्धिः उक्तदोषग्रस्तत्वात् तेषां प्रत्यक्षोपजीव्यत्वाच्च । न च शून्यं वा तव कथं सिद्ध्यतीति वाच्यम् । शून्यसिद्धौ प्रमाणव्यापारानुपयोगात्, इतरासिद्धिमात्रात्मकत्वात् तस्येति ॥ ५४ ॥ अतएवाह–सोऽपीति । शून्यपदार्थोऽपि शून्यतां प्राप्तः निश्चितादुष्टप्रमाणाविषयत्वात् । तस्मात् शून्यमिति न किञ्चिद्वस्तु स्यादितरासिद्धिमात्रात्मक-

तस्माच्छून्यं न किञ्चित् स्यादित्येष प्रविनिर्णयः ॥५५॥
इति शुङ्गवचः श्रुत्वा तेषु केचिद्द्विजाधमाः ।
तं श्रिता निश्चयाभासं बभूवुः शून्यवादिनः ॥ ५६ ॥
विनाशमीयुस्तन्निष्ठाः शून्यभावं परंगताः ।
ये द्विजाः सारहृदयाः ते शुङ्गस्य प्रभाषितम् ॥ ५७ ॥
निरूप्य कौशिके तेन समाहितहृदोऽभवन् ।
तस्मात् सर्वात्मना त्यक्त्वा तर्कं तमनवस्थितम् ॥५८॥
सदा सदागमायत्ततर्कः श्रेयः समाप्नुयात् ।
इति प्रोक्तो हेमचूडः प्रिययात्यन्तधीरया ॥ ५९ ॥
पुनः पप्रच्छ चात्यन्तविस्मितस्तां महाशयाम् ।

---

त्वात् तस्य । यद्वा ननु प्रमातृप्रमाणप्रमेयासिद्धावपि विकल्प-धारायाः स्वप्रकाशायाः सत्त्वान्न शून्यमात्रशेष इति चेदाह—सोऽपीति । विकल्पोऽपीत्यर्थः । तस्यानवस्थया प्रमाणान्तराविषयत्वात् स्वप्रकाशत्वे कर्तृकर्मभावविरोधात् सोऽपि शून्यात्मतां प्राप्तः । तस्माद्विकल्परूपमपि सन्न सिध्यतीति शून्यमेवेति प्रविनिर्णयः ॥५५॥ तेषु कौशिकशिष्येषु मध्ये । द्विजाधमाः असारहृदयाः । तं शुङ्गसिद्धान्तम् ॥५६॥ सर्वस्य शून्यतानिश्चयेन स्वात्मानमपि शून्यं मन्यमानाः शून्यभावं स्थावरतां प्राप्ताः । न त्वभावरूपतां गताः । वस्तुतो भावस्याभावत्वानुपपत्तेः । सारहृदयाः । सारं विचारपरं हृदयं मनो येषाम् ॥ ५७ ॥ तेन कौशिकोक्तेन । शङ्काया नाशात् समाहितहृदः । यतोऽनवस्थिततर्कस्यानर्थसम्पत्तिः तस्मात् ॥ ५८ ॥ सदागमस्यायत्तोऽनुकूलः तर्को यस्य । धीरया पण्डितया ॥ ५९ ॥ असकृभाव्यमानां योषिति

अहो प्रिये ते वैदुष्यमीदृशं नाविदं पुरा ॥ ६० ॥
धन्यासि त्वमहञ्चापि धन्यो यस्त्वामुपागतः ।
ब्रवीषि श्रद्धया सर्वं श्रेयःसिद्धिर्हि तत् कथम् ॥६१॥
कुत्र श्रद्धा विधातव्या कुत्र वा सा न शस्यते ।
आनन्त्यादागमानां वै विरुद्धार्थसमाश्रयात् ॥ ६२ ॥
आचार्यमतभेदाच्च व्याख्यातृमतभेदतः ।
स्वबुद्धेरनवस्थानात् किमादेयं न वापि किम् ॥ ६३ ॥
यद्यस्याभिमतं तत् स वदत्येव सुनिश्चितम् ।
अन्यच्चाप्यव्यवसितं हानिप्रदमपि प्रिये ॥ ६४ ॥

---

विद्वत्तां दृष्ट्वा विस्मितः ॥ ६० ॥ उपागतः सङ्गतः ॥ ६१ ॥ आगमे श्रद्धा विधेयेत्युक्ते आगमानामप्यनैक्यात् कुत्र श्रद्धा कर्त्तव्येति पृच्छति—कुत्रेति । सा श्रद्धा । अनैक्येऽप्यागमानामथैक्याद्यत्र क्वचिच्छ्रद्धां कुर्वीति चेदाह—विरुद्धेति ॥ ६२ ॥ न विरुद्धार्थत्वं बौद्धार्हतवेदाद्यागमानामेव परस्परम् । अपि तु एकैकागमेऽपि आचार्यमतभेदादपि विरोध इत्याह—आचार्येति । स्पष्टश्चैतत् । तथाहि । वैदिकाद्यागमाचार्याणां जैमिनिपतञ्जलिप्रभृतीनां परस्परं मतविरोध इति । तथा जैमिनिशास्त्रव्याख्यातॄणां शबरकुमारिलप्रभृतीनां परस्परं व्याख्याविरोधः । नन्वेवं परस्परविरोधेऽपि स्वबुद्ध्या विचार्य यच्छ्रेष्ठं तच्छ्रद्धेयमिति चेदाह—स्वबुद्धेरिति । विचारो हि तर्करूपः । तथा सति तर्कस्य बुद्धिविभवत्वेन बुद्धेः कालभेदेन स्थितिभेदादेकस्यैव पुरुषस्य कालभेदेन विविधतर्कसम्भवादनवस्थानमिति भावः ॥६३॥ आचार्यादिपरस्परविरोधमेवाह—यदिति । तत् साधनत्वेन वदति । अ-

तत्रैवं सति नैवान्तं कश्चिदत्रापि गच्छति ।
यः शून्यमाह तत्त्वं सोऽप्यशून्यं दूषयेत् परम् ॥६५॥
अश्रद्धेयं कुतो वा तत् सङ्गतं चागमेन हि ।
एतद् ब्रूहि प्रिये सम्यग् न ह्येतत्तेऽस्त्यचिन्तितम् ६६

इति श्रीम० ज्ञानखण्डे हेमचूडोपाख्याने श्रद्धाप्रशंसनं नाम षष्ठोऽध्यायः ।

---

न्यत् । अनभिमतम् अव्यवसितं साधनत्वेनानिश्चितम् ॥६४॥ तत्र आगमेषु । एवं सति विरोधे सति । अन्तं निश्चयम् । अत्रापि विचारे कृतेऽपि ॥ ६५ ॥ शून्यवादिनापि शुक्रेन शून्यतत्त्वमुक्तं अशून्यतत्त्ववादो दूषितः, आगमेन च तन्मतं सङ्गतमेव तस्मात्तन्मतं कुतो न श्रद्धेयमेतन्मे वदेत्याह—अश्रद्धेयमिति । यद्यप्येष दुरुद्धराक्षेपः तथाप्येतत्त्वया चिन्तितमस्तीति सम्भाव्यते तव सर्वज्ञकल्पत्वादित्याशयेनाह—न ह्येतदिति ॥ ६६ ॥

इति श्री० व्याख्यायां तात्पर्यदीपिकायां षष्ठोऽध्यायः ॥ ६ ॥

इति पृष्टा हेमलेखा भर्त्रा प्रियतरेण सा ।
प्रोवाच विदुषा सम्यग् विज्ञातलोकसंस्थितिः ॥ १ ॥
शृणु वक्ष्ये प्रियतम स्थिरशान्त समादरात् ।
मनो हि मर्कटप्रायमस्थिरं सर्वदैव तत् ॥ २ ॥
यत एवं महानर्थं प्राप्तवान् प्राकृतो जनः ।
चलन्मनः सर्वदुःखनिदानं दृष्टमेव हि ॥ ३ ॥
यतः सुषुप्तौ चलनाभावाद्विन्दति वै सुखम् ।
तस्मान्मनः स्थिरीकृत्य शृणु वक्ष्ये ब्रवीम्यहम् ॥ ४ ॥
अनादरेण श्रुतश्च भवेदश्रुतसम्मितम् ।
अफलं स्यात्तदत्यन्तं यथा चित्रतरुश्रयः ॥ ५ ॥

---

अत्राध्याये वेदपद्यैः श्रद्धापौरुषतर्कतः ।
शिवं ज्ञात्वाराध्य ततो लभेच्छ्रेय इतीर्यते ॥ १ ॥

विज्ञाता लोकस्य संस्थितिराधिष्ठानं वा यया ॥ १ ॥ स्थिरस्वान्तोऽनन्यचित्तः । समादरात् इदं मया श्रोतव्यमेवेत्यभिनिवेशात् । एतद्द्वयस्यापि क्रमेण फलमाह–मन इति । न स्वभावतो मनसः स्थैर्यमिति भावः । यत एवं तत् तस्मात् स्थिरः स्वान्त इति योजना ॥ २ ॥ तदस्थैर्येण किं मे भवेदिति चेदाह–यत इति । मनसश्चलनादित्यर्थः ॥ ३ ॥ मनसश्चलनादेव दुःखमिति व्यतिरेकतो दर्शयति–यत इति । सर्वोऽपि विन्दति । तस्मादिति । नित्यप्राप्तस्वरूपसुखफलविघटकस्य मनश्चलनस्य श्रवणफलविघटकत्वं सुतरां भवेदिति तात्पर्यम् ॥४॥ अनादरेण श्रुतम् । अश्रद्धया असमाहितमनसा आपाततः श्रुतम् अफलमिति । नास्ति फलं यस्य तत् । न ह्येतद्वक्ष्यमाणं शास्-

अनवस्थिततर्कत्वमपहाय विनाशनम् ।
सत्तर्कमाश्रित्य जनः प्राप्नुयात् सुफलं द्रुतम् ॥ ६ ॥
सत्तर्कसंश्रयेणाशु साधनैकपरो भवेत् ।
सत्तर्कजनितां श्रद्धां प्राप्येह फलभाङ् नरः ॥ ७ ॥
अनवस्थिततर्कन्तं विहायालोकय प्रिय ।
प्रवृत्तिमेतां जगतः श्रद्धया फलशालिनीम् ॥ ८ ॥
सुतर्कितेन कालेन कर्षकः क्ष्मां विकर्षति ।
श्रद्धयैव तथा रूप्यस्वर्णरत्नौषधादिकम् ॥ ९ ॥

---

मिव श्रुतिमात्रेण फलावहं—किन्तु मननादिद्वारेण । तथा चाद-राभावे मननादावप्रवृत्तेः । चित्रलिखितवृक्षाश्रयवत् व्यर्थं श्रवणं स्यादिति भावः । तत् श्रवणम् ॥ ५ ॥ ६ ॥ ननु मम शुष्क-तर्कं सन्त्यज्य त्वदुक्तौ विश्रब्धस्यापि सत्तर्कपरस्य न फल-प्राप्तिर्दृश्यते इति चेदाह—साधनैकपर इति । नन्वलं सत्तर्केण कु-तर्कस्यापि मे साधनपरत्वेनैव फलं भवेदिति चेदाह—सत्तर्केति । कुतर्कस्य वक्ष्यमाणसत्तर्कमूलकेश्वरासिद्धेर्दुर्घटत्वेन तदाराधनश्र-द्धा दूरतोऽपास्तेति केवलाराधनस्याश्रद्धया हुतं दत्तम् । न च तत् प्रेत्य नो इहेति नीत्या निष्फलमिति सत्तर्कजनितश्रद्धया साधनपर एव फलभाग् भवतीत्याशयः ॥ ७ ॥ तं प्रसिद्धं त्वयि स्थितम् । अनवस्थिततर्करहितानां श्रद्धावतां फलशालिनीं प्रवृत्ति-मवलोकय । तत्फलस्य न परोक्षत्वमिति भावः ॥ ८ ॥ तां प्रवृत्तिमेवाह—सुतर्कितेनेति । आगमाविरुद्धस्तर्कः सुतर्कः । शा-स्त्रोक्तहलप्रवहणयोग्यः तर्कितानावृष्ट्यादिशस्यप्रतिबन्धाभाववां-श्च यः कालः तेन निमित्तेन कर्षति । न तु तर्कानवस्थित्या स-

व्यवस्यन्ति सुतर्केण त्यक्त्वा तर्कानवस्थितिम् ।
तस्मात् सुतर्कश्रद्धाभ्यां व्यवस्य श्रेय आत्मनः॥१०॥
प्रयतेत साधनाय नहि तर्कानवस्थितेः ।
विरमेत् पौरुषाद्यत्नाच्छुङ्गानुगनरा इव ॥ ११ ॥
श्रद्धया पौरुषपरो न विहन्यते सर्वथा ।
दृढं पौरुषमाश्रित्य न प्राप्येत कथं फलम् ॥ १२ ॥
पौरुषात् कर्षका धान्यं वणिजो धनमेव च ।
राज्यलक्ष्मीं नृपा विप्रा विद्यां सर्वसुखाश्रयाम् ॥१३॥
शूद्रा भृतिं सुधां देवास्तापसा लोकमुत्तमम् ।
प्रापुरन्येऽप्यभिमतं पौरुषेणैव कर्मणा ॥ १४ ॥
अनवस्थिततर्केणाश्रद्धेन पुरुषेण किम् ।

---

यत्राश्रद्धया त्वमिव तूष्णीं तिष्ठतीति भावः ॥ ९ ॥ तथा पूर्वरूपादिदमतिसूक्ष्मलक्षणमपि स्वर्णादिकमेतावन्मौल्यार्हमेवंविधगुणमेवं रोगहरमिति परीक्षका आगमतर्काभ्यामेव व्यवस्यन्ति प्रायो न विसंवाद्यन्ते चेत्याह—व्यवस्यन्तीति । सुतर्कः पुरुषः कचिद्विसंवाद्यते न त्वनवस्थितर्कवत् सर्वशून्यत्वेनात्मापहारं प्राप्नोतीति यतः तस्मात् । आत्मनः श्रेयो व्यवस्य नि-२ श्चित्य तत्साधनाय यतेदिति सम्बन्धः ॥ १० ॥ शृङ्गानुगता नरा इवासत्तर्केण सर्वशून्यत्वं सम्भाव्य पौरुषयत्नविमुखो न भवेदित्याह—न हीति ॥ ११ ॥ पौरुषं पुरुषयत्नः । फलप्राप्त्या न विहन्यते । केषाञ्चित् फलाभावो ह्यदृढपौरुषादित्याह—दृढमिति ॥१२॥ दृढपौरुषयोगान्न फलमिति सप्रत्ययमाह—पौरुषादिति ॥ १३ ॥ १४ ॥ किञ्चिदपि किं फलं कदा काले

कदा किञ्चित् कथं प्राप्तं फलं वद विमृश्य तत् ॥१५॥
क्वचित् फलविसंवादात् सर्वत्राश्वासवर्जने ।
विजानीयाद्दैवहतं तं स्वात्मरिपुरूपिणम् ॥ १६ ॥
अतः पौरुषमाश्रित्य श्रद्धासत्तर्कपोषितम् ।
श्रेयसां यन्मुख्यतमं साधनं तत् समाश्रयेत् ॥ १७ ॥
तत्र दृष्टसाधनानां वैचित्र्यञ्च पृथग्विधम् ।
तेषु यत् सर्वथा साध्यं साधयेत् तद्धि मुख्यकम् ॥ १८
तत् सुतर्कानुभूतिभ्यां व्यवस्याशु समारभेत् ।
तत्ते सर्वं प्रवक्ष्यामि सावधानः शृणुष्व तत् ॥ १९ ॥

---

साधनं विना कथं प्राप्तम् ॥ १५ ॥ ननु कर्षकादीनामपि क्वचित् फलाभावो दृश्यते इति चेत्तावतैवाप्रवृत्तिर्मौर्ख्यमूलैवेत्याह—क्वचिदिति । आश्वासः श्रद्धा ॥ १६ ॥ श्रद्धासत्तर्काभ्यां पोषितम् । सत्तर्केण श्रद्धोदयः श्रद्धया च पौरुषस्य वृद्धिर्भवेदिति भावः । ननु श्रेयःसाधनमपि कर्मयोगादिकं शास्त्रेषु बहुविधं प्रसिद्धं तत्र कतमं साधनं समाश्रयेदिति चेदाह—श्रेयसामिति ॥१७॥ श्रेयःसाधनस्य मुख्यत्वं किन्त्वादिति चेदाह—तत्रेति । फलप्राप्ताविस्यर्थः । पृथग्विधं दृष्टमिति शेषः । तेषु विचित्रत्वेन पृथग्दृष्टेषु साधनेषु । साध्यं फलं सर्वथा यत् साधयेत् । नेहाभिक्रमनाशोऽस्तीत्यादिनीत्या फलविपर्ययो तत्मुख्यं सर्वथेति ॥१८॥ एतदपि वा कथं निश्चेतव्यमिति चेदाह—तदिति । व्यवस्य निश्चित्य । तत्र नृदेहस्य श्रेयोनिदानस्य दुर्लभस्य मृत्युग्रस्तत्वेनाह—आश्विति । निश्चयो वा मम कथं स्यादिति चेदाह—

श्रेयस्ताद्धि विजानीयाद्यस्माद् भूयो न शोचति ।
शोकः सर्वत्र एव स्याद् दृश्यते सूक्ष्मया दृशा ॥२०॥
यच्छोकैरनुसंभिन्नं न तच्छ्रेयो हि सर्वथा ।
धनं पुत्रास्तथा दारा राज्यं कोशो बलं यशः ॥ २१ ॥
विद्या बुद्धिर्दर्शनञ्च देहः सौन्दर्यसम्पदः ।
सर्वमेतदास्थिरत्वात् कालसर्पमुखस्थितम् ॥ २२ ॥
शोकाङ्कुरमहाशक्तिबीजात्मकतया स्थितम् ।
कुत आत्यन्तिकश्रेयःसाधनत्वं समर्हति ॥ २३ ॥
अतः परमकं श्रेय एतद्धै मुख्यतो भवेत् ।
एवं धनादिविषये यदादेयत्वविभ्रमः ॥ २४ ॥

---

तदिति । मुख्यं श्रेयस्तत्साधनं चेत्यर्थः ॥ १९ ॥ तत्रादौ मुख्यं श्रेयःपदार्थमाह--श्रेय इति । ननु तादृशं धनादिकमेवेति चेन्नेत्याह—शोक इति । कथं धनादेः शोक इति चेदाह—विवेकदृशा सर्वतः शोको दृश्यते ॥ २० ॥ तदेवाह—यदिति । अनुसंभिन्नं युतम् ॥ २१ ॥ आन्तरमाह—विद्येत्यादि । दर्शनं करणम् । सौन्दर्यस्य सम्पदः प्राप्तयः । एतत् सर्वं नाशग्रस्तमिति शोकावहत्वाद्दुःखयुतमित्याह—सर्वमिति ॥ २२ ॥ शोकाङ्कुरोत्पादने महाशक्तियुतबीजवत् अङ्कुरशक्तेः साधारणोपायैरनाश्यत्वमिति भावः । तस्मादेवंविधस्य नैवात्यन्तिकश्रेयःसाधनत्वमित्याह—कुत इति ॥ २३ ॥ अतः धनादेः साधनत्वात् । श्रेयः श्रेयःसाधनम् । एतत् वक्ष्यमाणं देवताराधनम् । कथं देवताराधनेनैव श्रेयोलाभ इत्येतन्निरूपयितुमाह—एवमिति । श्रेयःसाधनत्वेनेत्यर्थः । यदिति यो

मोहादेव समुद्भूतो मोहको हि महेश्वरः ।
यो हि सर्वजगत्कर्त्ता तस्मात् सर्वे हि मोहिताः ॥२५॥
मोहयत्यल्पकोऽपीह विद्याभागसमाश्रयात् ।
कांश्चिदेव न सर्वान् स यस्माद्विद्या हि सा मिता ॥२६॥
अल्पविद्यं मायिनश्चाप्यनुत्क्रान्ता जना यतः ।
महादेवं महामायं कः समुत्क्रान्तुमर्हति ॥ २७ ॥
यो हि लोकेऽल्पमायाश्च जानाति प्रतिविद्यया ।
स मोहान्निर्गतः स्वस्थः सुखमाप्नोत्यनश्वरम् ॥ २८ ॥
एवंविधापि विद्या तमनाश्रित्य तु मायिनम् ।
न लभ्या सर्वथा यावदप्रसाद्य तु सर्वथा ॥ २९ ॥
तस्मान्महामायिनं तमप्रसाद्य कथं भवेत् ।
महामोहस्य तरणं तस्मात्तं सर्वथाश्रयेत् ॥ ३० ॥

---

विभ्रम इत्यर्थः ॥ २४ ॥ कोऽयं मोहक इति चेदाह—महेश्वर इति । कथम्भूतो महेश्वर इति चेज् जगत्कर्तृत्वेन सिद्धो नापह्नवनीय इत्याह–यो हीति ॥ २५ ॥ कथमस्यैवं सामर्थ्यमिति चेदाह–मोहयतीति । अल्पकः देहादिपरिच्छिन्न ऐन्द्रजालिकः । अस्य विद्या मितेति न सर्वमोहकत्वम् ॥ २६ ॥ मायिनमप्रसाद्य तन्मोहतरणमशक्यमित्याह अल्पविद्यमिति ॥ २७ ॥ अल्पमायाम् । निरोद्धुमिति शेषः । स्वस्थः तन्निर्मितसर्पादिभयरहितः । अनश्वरं तन्माययाऽविनाश्यम् ॥ २८ ॥ एवंविधापि अल्पमायाप्रतिरोधिविद्यापि । तम् अल्पमायिनम् । यावत् यस्मात् । अनाश्रित्य सर्वथा धनदानसेवनाद्यैरप्रसाद्य न लभ्या । सर्वथा तमप्रसाद्येत्यग्रिमेण सम्बन्धः ॥ २९ ॥ तस्मात् अप्रसा-

यस्तं प्रसादयेत् सम्यक् प्राप्य तस्य प्रसादतः ।
महाविद्यां स तन्मोहाद् ध्रुवमुत्क्रान्तिमेष्यति ॥ ३१ ॥
अन्येऽपि योगाः कथिताः श्रेयःसाधनकर्मणि ।
महेश्वरप्रसादात्ते विना न स्युः फलाप्तये ॥ ३२ ॥
तस्मादाराधयेदादौ महेशं विश्वकारणम् ।
भक्त्या स साधयेदाशु योगान्मोहविनाशनान् ॥ ३३ ॥
एतज्जगत् कार्यभूतं प्रत्यक्षं परिदृश्यते ।
सांशमेवं पृथिव्याद्यमदृष्टारम्भमप्यलम् ॥ ३४ ॥

---

दने मोहतरणाभावात् ॥ ३० ॥ सम्यक् अकापट्येन । महाविद्याम् । अद्वितीयशिवात्मविद्यां प्राप्य महामायास्वरूपं वेदेति शेषः । तन्मोहात् । महामायाकृतमोहात् ॥ ३१ ॥ योगाः युक्तयः प्राणायामादिरूपाः । श्रेयःसाधनकर्मणि हेतुत्वेनेति शेषः ॥ ३२ ॥ तस्मादिति । यस्मादीश्वराराधनं विना किमपि साधनं फलपर्यवसायि न भवेत्तस्मादित्यर्थः । आदाविति । सर्वसाधनोपक्रम इत्यर्थः । कुत एवमिति चेदाह—विश्वकारणमिति । तस्य सर्वकर्तृत्वेन तदनुग्रहं विना न किञ्चित् सेत्स्यतीति भावः ॥ ३३ ॥ कथमेष ईश्वरो जगत्कर्तृत्वेन सिध्यतीत्याशङ्क्येश्वरं प्रसाधयितुमुपक्रमते—एतदिति । प्रत्यक्षेण दृश्यमानामित्यर्थः । तच्च जगत् कार्यभूतमेवं प्रत्यक्षं यथा तथा परिदृश्यते । ननु घटादीनां कार्यभूतत्वं दृश्यते न तु पृथ्वीसमुद्रगिर्यादीनामिति चेत् तेषामपि सांशत्वेन हेतुना कार्यत्वं सेत्स्यतीत्याह—सांशमिति । अदृष्टारम्भमपि अदृष्टोत्पत्तिकमपि पृथिव्यादि ॥ ३४ ॥

कार्यं स्यादिति तर्केण बह्वागमदृढेन तु ।
व्यवस्येत्तत्र कर्त्तारं सर्वकर्तृविलक्षणम् ॥ ३५ ॥
यद्यप्यकर्त्तृकं लोकमाह कश्चिदिहागमः ।
तदनेकैरागमैस्तु तर्करूढैः सुबाधितम् ॥ ३६ ॥

---

यत् सावयवं तत् कार्यमिति तर्केण पृथिव्याद्युत्पत्तिमदिति भावः । नन्वेवमपि परमाण्वाकाशादीनां निरवयवत्वेनाकार्यत्वान्न जगन्मात्रं कार्यभूतमिति चेन्न । वेद्यत्वेन हेतुना कार्यत्वसिद्धेः । न च निरवयवत्वेन कार्यत्वाभावः साधयितुं शक्यः, वेद्यत्वे हेतुकानुमानस्य बह्वागमसंवादेन दृढतरत्वादित्याह–बह्वागमेति । तथा चागमः । द्यावाभूमी जनयन् देव एकः, आत्मन आकाशः सम्भूतः, आकाशाद्वायुप्रमुखं दृश्यं सर्वं ससर्ज स इत्यादयः । तथा च दृश्यमात्रस्य जगतः कार्यत्वे सिद्धे तत्र जगति कार्यत्वेन कर्तृपूर्वकत्वं साधयेदित्याह–व्यवस्येदिति । तत्र पृथिव्यादौ कर्तारं निश्चयविषयीकुर्यादित्यर्थः । ननु घटादितत्तत्कार्येषु सिद्धकुलालादिभिः सिद्धसाधनमित्याशङ्क्याह–सर्वकर्तृविलक्षणमिति । नासदासीन्नोसदासीत्तदानीम्, पुरा सृष्टेरिदं दृश्यं नाणुमात्रमपि स्थितमित्याद्यागमानुरोधेनादिसृष्टावुपादानाद्यभावात्तदनपेक्षणात् सर्वकर्तृविलक्षण एष कर्त्ता साधित इति भावः ॥ ३५ ॥ नन्वागमसंवादाद्यथा जगत्कार्यत्वगमकस्तर्को दृढस्तथाऽकार्यत्वानुमापकस्तर्कोऽपि दृढः कुतो न भवेत्, अकर्त्तृको ह्ययं लोकः स्वभावैकसमाश्रय इत्यादि बार्हस्पत्यागमसंवादादित्याशङ्क्य नैष सदागमः किन्त्वागमाभास एवेति चार्वाकमतप्रक्षेपायोपक्रमते–यद्यपीति । कश्चिदागमश्चार्वा-

यत्रात्मनाश एवार्थः प्रत्यक्षैकसमाश्रयात्।
तदागमाभासमेव न तद्धि महदाश्रयम् ॥ ३७ ॥

---

कागमः। अत्रेयं चार्वाकप्रक्रिया। भूमिरापोऽनलो वायुरिति तत्त्वचतुष्टयम्। प्रत्यक्षमानसंसिद्धं पञ्चमं नहि विद्यते। एतत्संघात्मको लोकः प्रतिक्षणविभेदितः। पूर्वपूर्वजगज्जालसदृशं चोत्तरोत्तरम्। एवं स्वभाव एवैष लोकः स्वस्मिन् प्रतिष्ठितः। गुडोदकादौ स्वाभाव्यान्मदशक्तिर्यथोद्भवेत्। एवं स्त्रीगर्भनिहिते शुक्रशोणितबुद्बुदे। उत्पद्यते हि चैतन्यं क्रियाज्ञानसमाश्रयम्। मदशक्तियुतं तोयं मद्यमित्युच्यते यथा। एवं चैतन्यसंयुक्तो देहः पुरुष उच्यते॥ सुखं पुमर्थः स्वर्गः स्यात् दुःखन्तु नरको भवेत्। प्रवर्त्तकद्वयञ्चैतत् स्वभावादेव नान्यथा॥ सुखदुःखाभास एवं संसारः प्रणिगद्यते। मदिरामदशक्तेस्तु यथा नाशः स्वभावतः॥ एवं चैतन्यनाशो हि मोक्ष इत्युच्यते बुधैः। मृतस्य नास्ति स्वर्गो वा नरको वापि कश्चन॥ तत् चार्वाकशास्त्रम्। अनेकैः आस्तिकनास्तिकसम्बन्धिभिः। आगमैः तर्करूढैः अनुगततर्कैर्बाधितमतस्त्याज्यमेवेति सम्बन्धः॥ ३६॥ अनेकागमविरोधादाभासत्वमुक्तं सम्प्रति सर्वानुभवविरोधाच्च तथात्वमाह—यत्रेति। जननमरणादिप्रवाहरूपः संसारो दुःखरूपत्वाद्धेयः। एतत्संसारस्य निमित्ताभावासम्पादनेनाभावे सति महासुखस्वरूपानुभवो मोक्षः परमपुरुषार्थरूपोऽतएव सर्वैरुपादेय इति हि मोक्षस्य पुरुषार्थत्ववादिनां मतं तर्कागमाद्यैर्व्यवस्थितम्। एवं सति प्रत्यक्षैकप्रमाणसमाश्रयादात्मनाश एव पुरुषार्थ इति यत्र शास्त्रे उक्तं तदागमाभासमेव। अ-

शुष्कतर्कैकसंक्लृप्तं शास्त्रं तत्त्याज्यमेव हि ।
अन्यैरप्युच्यते कैश्चिज्जगदेतत् सनातनम् ॥ ३८ ॥
अबुद्धिमत्कर्तृकं चेत्येतच्चाप्यसमञ्जसम् ।

---

तएव तच्छास्त्र न महतां सारासारविवेचकानामाश्रयं पुरुषार्थप्रयोजकत्वेनोपादेयम् ॥ आत्मनाशः पुरुषार्थ इति वदन् चार्वाकः प्रष्टव्यः । किमात्मनाशोऽयं कश्चन पुरुषार्थः उत तत्समुदायः, अहोस्विदात्मसामान्यनाशः ? नाद्यः । आत्मनस्तव मते क्षणिकत्वेन यत्किञ्चिदात्मनाशस्य प्राप्तत्वात् । इतरयोरसम्भवात् । नापि स्वात्मसन्ताननाशः । स्वात्मनाशकाले स्वस्यासत्त्वेन स्वात्मनाशस्याप्राप्तव्यत्वेनापुरुषार्थत्वात् । अप्राप्तव्यस्यापि पुरुषार्थत्वे अन्यात्मनाशस्यापि पुमर्थत्वप्रसक्तेः । अथ च स्वात्मनाशः प्रमाणेन सिद्धः । प्रत्यक्षं हि सन्निकर्षनिमित्तकं नातीतानागतयोः सम्भवति । न ततोऽन्यत् प्रमाणमनुमानाद्यभ्युपगम्यते त्वया । प्रत्यक्षमात्रं प्रमाणं वदता त्वया गुडोदकादौ मदशक्त्युद्भवादेर्दृष्टान्तत्वानिरूपणेन चैतन्याद्युद्भवादिसाधनमपि तन्नास्ति मे जिह्वेति कथनतुल्यमित्यादि ज्ञेयम् ॥ ३७ ॥
न तच्छास्त्रं सर्वज्ञप्रणीतमित्याह—शुष्केति । शुष्कः उपपत्तिरहितो यस्तर्कः । तदेकसंक्लृप्तं तन्मात्रमूलकमित्यर्थः । एवं प्रकृतपक्षप्रतिपक्षभूतं चार्वाकमतं निरस्य तथाविधमेव सांख्यमतं निराकर्तुमनुक्रमते—अन्यैरिति । सनातनम् सद्रूपमित्यर्थः । ते हि परिणामवादिनो जगत्कारणान्तर्भावेन सदेवेत्याहुः ॥३८॥
अबुद्धिमदिति । गुणसाम्यावस्थात्मकं प्रकृतितत्त्वं जगन्मूलकारणम् । तच्च बुद्धिमत्चितिक्रियारहितं जडम् । यथा हि मृत्

क्रियाया बुद्धिपूर्वत्वादबुद्धौ तददर्शनात् ॥ ३९ ॥

---

पिण्डो घटात्मना परिणममानः कुलालङ्कर्त्तारमपेक्षते । न तथा प्रकृतितत्त्वं जगद्रूपेण परिणममानं स्वातिरिक्तं कञ्चित् कर्त्तारमपेक्षते । अतो जगत्क्रियायां स्वतन्त्रमिति जगत्कर्तृभूतमित्यर्थः । इत्येतदनीश्वरं सांख्यमतम् । अत्र हि प्रकृतिः सत्त्वांशेन दर्पणतुल्येन स्वान्तःशुद्धचिद्रूपं पुरुषं स्वीयतमोंशमयं च दृश्यं प्रतिबिम्बत्वेन गृह्णाति । एवं प्रतिबिम्बभूतद्रष्टृदृश्यसम्बन्धादेव प्रकृत्यविवेकमापन्नः पुरुषो घटमहं जानामीति मृषाभिमानेन युज्यते । अयमेव पुरुषस्य संसारः । यदा हि पुरुषो विचारेण प्रकृतेर्विविक्तमात्मानं जानाति तदा ज्ञातचोर इव तत्पुरुषविषये प्रकृतेरनुपसरणात् पुरुषप्रतिबिम्बाग्रहणेन मृषाभिमानाभावान्मुच्यत इति तन्मतम् । अत्र हि प्रकृतौ प्रतिबिम्बभूतचित्सम्बन्धाद् दृश्यप्रकाशोऽभ्युपगतः । तत्र प्रतिबिम्बभूता चित् किमाश्रयवज्जडरूपा उत स्वनिमित्तमुख्यचिद्रूपा वा । आद्ये जडस्य दृश्यप्रकाशत्वानुपपत्तिः । जडस्य दृश्यप्रकाशत्वाभ्युपगमे प्रकृतिसत्त्वांशसम्बन्धेनैव सर्वोपपत्तौ चित्प्रतिबिम्बकल्पनवैयर्थ्यापत्तेः । द्वितीयेऽपि दृश्यस्य मुख्यचित्सम्बन्धोपगमाच्चित्प्रतिबिम्बवैयर्थ्यमेव । नच दर्पणस्य घटाद्यप्रकाशकत्वेऽपि तत्प्रतिबिम्बितसौरातपस्य गौणस्य घटादिप्रकाशकत्ववच्चितिप्रतिबिम्बस्यैव दृश्यप्रकाशकत्वमिति वाच्यम् । सौरातपप्रतिबिम्बस्यालोकवत् घटादिप्रकाशसहकारितेनाप्रकाशकत्वात् । नापि प्रतिबिम्बभूताचितः चिज्जडोभयरूपत्वमुभयविलक्षणत्वं वक्तुं युज्यते । विरोधादपसिद्धान्ताच्च । अथ च स्वभावस्यान्यथा-

बह्वागमोपष्टम्भाच्च कर्तात्र स्याद्धि बुद्धिमान् ।
बुद्धिमत्कर्तृकं कार्यं सर्वत्रैव हि दर्शनात् ॥ ४० ॥
एवं सत्तर्कागमाभ्यां जगदेतत् सकर्तृकम् ।
स कर्ता लौकिकेभ्यस्तु कर्तृभ्यः स्याद्विलक्षणः ॥४१॥
कार्यस्याचिन्त्यरूपत्वादचिन्त्यानन्तशक्तिकः ।

---

भावानुपपत्तेः पुरुषं प्रति प्रवृत्तिस्वभावायाः प्रकृतेः विवेकज्ञानानन्तरं निवृत्तिस्वभावतानुपपत्त्या बन्धस्यापरिहार्यत्वमित्याद्यभिसन्धायाह—एतच्चाप्यसमञ्जसमिति । क्रियाया इति । घटाद्युत्पत्तिक्रियायाः कुलालादिबुद्धिपूर्वत्वात् । एवम्भूतं घटमेव करोमीति बुद्धिमत्पूर्वकत्वाद् घटाद्युत्पत्तेरबुद्धिमत्प्रकृतिकर्तृकत्वं न जगत इति भावः । अबुद्धाविति । चित्रालिखितकुलालादौ घटादिक्रियादर्शनात् ॥ ३९ ॥ बह्विति। स ऐक्षत लोकानसृजदिति, नामरूपे व्याकरवाणीति, आदिकर्ता हि भगवानादावालोच्य वै जगत् । योगीव निरुपादानं प्रविविक्तमकल्पयदित्यादि बह्वागमः उपष्टम्भः आश्रयभूतः । अनुकूलो यस्यैवंविधात् जगद्बुद्धिमत्कर्तृकं कार्यत्वाद् घटादिवदिति बलवत्तर्कात् बुद्धिमानेव जगत्कर्ता भवेन्नाबुद्धिमती प्रकृतिरित्यर्थः । कार्यस्य बुद्धिमत्कर्तृकत्वे दृष्टान्तदौर्लभ्यं परिहरति सांख्यमते जडस्य प्रकृतितत्त्वस्य कर्तृत्वसाधने दृष्टान्तदौर्लभ्यवन्नात्रेति भावः ॥ ४० ॥ सकर्तृकं सिद्धमिति शेषः । ननु घटादिकर्ता कुलालादिरिवादिकर्तापि पुरुषः कश्चन सिद्ध्यतु तस्य पुनर्न परमेश्वरत्वं सिद्ध्यतीत्याशङ्क्याह—स कर्तेति ॥ ४१ ॥ तत्र हेतुः अचिन्त्यरूपत्वादिति । कथं जले स्थिता पृथ्वी जलं वापि कथं

अपरिच्छिन्नसामर्थ्यः कार्यस्यानुगुणत्वतः ॥ ४२ ॥
स प्रपन्नान् समुद्धर्तुं प्रभवत्येव सर्वथा ।
अतस्तं सर्वभावेन शरणीकुरु सर्वदा ॥ ४३ ॥
निदर्शनं तेऽभिधास्ये शृणु प्रत्ययकारणम् ।
मितेश्वरोऽप्यत्र लोके चाकापट्यात् प्रसादितः ॥४४॥
सर्वात्मना योजयति स्वेष्टार्थैः श्रेयसे नरम् ।
एष लोकेश्वरो देवः सम्यग् येन प्रसादितः ॥ ४५ ॥
तस्मै किं न दिशेद् ब्रूहि भक्तलोकैकवत्सलः ।
पुरुषा हीश्वरा लोके चानवस्था अवत्सलाः ॥ ४६ ॥

---

दिवीत्यादिरीत्या कार्यस्याचिन्त्यता ज्ञेया । लौकिककर्तृवैलक्षण्यमत्राह—अचिन्त्येति । एवंविधा एतावतीति तच्छक्तिर्न चिन्त्या नापि सान्ता । एतदेव निष्कृष्याह—अपरिच्छिन्नेति । लोके कार्यगुण एव कर्त्ता दृष्ट इति अपरिच्छिन्नजगतः अपरिच्छिन्नसामर्थ्य एव कर्त्तेति भावः ॥ ४२ ॥ एतावता ग्रन्थेनेश्वरं प्रसाध्य सम्प्रति तस्य शरण्यत्वमाह—स प्रपन्नानिति । यत एव मतः तम् जगत्कर्त्तारम् । सर्वभावेन निष्कामत्वेनेत्यर्थः । ये कामिनः तेषां अर्द्धो भावः अर्द्धं चित्तं काम्ये तिष्ठति अर्द्धमीश्वर इति भावः ॥ ४३ ॥ सर्वभावेन शरणीकृतात् फलप्राप्तौ निदर्शनं दृष्टान्तः । प्रत्ययो विश्वासः । अकापट्यात् सर्वभावेन ॥ ४४ ॥ सर्वात्मना कायवाङ्मनोभिः प्रसादित इति सम्बन्धः । श्रेयसे । सुखाय ॥ ४५ ॥ तस्मै । उपासकाय इष्टं न दिशेत् किम् । अपि तु दिशेदेवेत्यर्थः । यद्वा किं इष्टं न दिशेदपि तु सर्वं दिशेदेव । ननु मितेश्वराणां स्वस्य समीहितसेव्य-

निर्दयाश्च कृतघ्नाश्च तस्मात् तत् फलमास्थिरम् ।
परमेशो दयासिन्धुः कृतिज्ञः सुव्यवस्थितः ॥ ४७ ॥
अन्यथानादिसंसारे कुतोऽनिन्द्यत्वमाप्नुयात् ।
व्यवस्थिता जगद्धात्रा चापि वा स्यात् कथं वद ॥४८॥
अनवस्थस्य राज्यन्तु नष्टमालोक्यते यतः ।
तस्मादेव दयासिन्धुः सुव्यवस्थश्च कीर्त्तितः ॥ ४९ ॥
तमेव सर्वभावेन भक्त्याशु शरणीकुरु ।
श्रेयसि त्वां योजयेत् सः त्वं न तत्परतां व्रज ॥५०॥

---

भावसम्पत्या सन्तोषादिष्टार्थप्रदानं युज्यते । परमेश्वरस्य प्राप्तकामत्वेन संतोषाभावात् कथमुपासितस्येप्सितदातृत्वमिति चेदाह-भक्तलोकैकवत्सलइति । तस्य भक्तेषु वत्सलस्वभावत्वादेव फलदानं युज्यत इति भावः । किञ्च मितेश्वरेभ्यः फलप्राप्तिरानियता परमेश्वरात्तु नियतेत्याह—पुरुषा इति ॥ ४६ ॥ तस्मात् । अनवस्थत्वादिधर्मचतुष्टययुक्तात् । अस्थिरम् अनियतम् । ईश्वरस्तु नैवंविध इत्याह—परमेश इति । यत एवमतः फलप्राप्तिर्भवेदेवेति शेषः ॥ ४७ ॥ कुत एतन्निश्चितमिति चेदाह-अन्यथेति । अवत्सलत्वादिसत्त्वेऽनिन्द्यो न भवेत् अनवस्थश्च तत्कृता लोकयात्रा व्यवस्थिता न भवेदिति भावः ॥ ४८ ॥ अनवस्थेति । ईश्वरस्यानवस्थितत्वे तत्सृष्टः संसारोऽकाले एव नश्येदिति भावः ॥ ४९ ॥ सर्वभावेन निष्कामत्वेन । श्रेयसि परश्रेयःसाधने । त्वं न तत्परतां व्रजेति । परश्रेयः-साधनस्य दुर्विज्ञेयत्वेन त्वं न तत्परो भव किन्तु त्वं सम्प्रतीश्वरमाराधय त्वदाराधनेन प्रसन्न ईश्वरस्त्वां तत्र योजयेदि-

उपासने बहुविधमार्त्यार्थार्थित्वतोऽपि च ।
निर्हेतुकन्तु काचित्कं तत् सत्योपासनं भवेत् ॥५१॥
दृष्टमेतत् सर्वतो वै चार्त्तेनोपासितः प्रभुः ।
कदाचिद् दयया विष्ट आर्त्तिं तस्य विमोचयेत् ॥५२॥
उपेक्षेत कदाचिद्वोपास्तेर्वै तारतम्यतः ।
एवमेवार्थार्थिनोऽपि मितश्चानियतं फलम् ॥ ५३ ॥
निर्हेतुकोपासनस्य ज्ञात्वा निर्हेतुतां चिरात् ।
मितेश्वरोऽप्यव्यवस्थस्तदधीनो भवत्यलम् ॥ ५४ ॥
निर्हेतुकत्वज्ञानाय चिरं स्यादज्ञभावतः ।
एष सर्वेश्वरो देवो हृदयेशोऽखिलस्य तु ॥ ५५ ॥

---

ति भावः । एतेन मतभेदेषु साधनभेदसत्त्वात् किं साधनमुपादेयमिति शङ्का प्रक्षिप्ता ज्ञेया ॥ ५० ॥ निष्कामत्वेनेश्वरभजनमेव सर्वथा फलमिति वक्तुमाह—उपासनमिति । आर्त्या रोगादिकृतपीडया । अर्थार्थित्वतः धनादिलिप्सया वा । आर्त्या कृतमुपासनं प्रसिद्धं सर्वत्र । निर्हेतुकं निष्कामोपासनं सत्योपासनम् । सत्यफलसहितत्वात् ॥५१॥ एतदेव लौकिकदृष्टान्तेनोपपादयति—दृष्टमेतदिति ॥५२॥ तारतम्यत इति। उपास्तेराधिक्ये आर्त्तिं मोचयेदन्यथोपेक्षेतेति भावः । एवमिति । उपास्तितारतम्यादर्थप्राप्तिरप्राप्तिर्वा । एवं कामिनामुपासनफलमनियतम् । मितश्च यदर्थमुपासनं तस्य परिमितत्वात्, उपास्यस्य कृतघ्नत्वे फलाप्राप्तश्चेति भावः ॥ ५३ ॥ तदधीनः उपासकाधीनः ॥ ५४ ॥ मितेश्वरस्य उपासकनिर्हेतुकत्वज्ञानाय कालविलम्बापेक्षास्ति ईश्वरस्य तु न साऽपीत्याह—एष इति । अन्तर्यामित्वेनाखिलहृद-

सर्वं जानाति तत्काले फलं दद्याच्च सत्वरम् ।
आर्त्तमर्थार्थिनं देवस्तदर्थेनाभियोजितुम् ॥ ५६ ॥
स्वनियत्या कर्मपाकं प्रतीक्ष्य फलमादिशेत् ।
निर्हेतुकोपासकं स्वमनन्यशरणं विभुः ॥ ५७ ॥
ज्ञात्वा सर्वात्मना तस्य योगक्षेमवहो भवेत् ।
अप्रतीक्ष्य कर्मपाकं नियतिं स्वां विधूय च ॥ ५८ ॥
तत्साधनं सम्प्रसाध्य द्रुतं संयोजयेत् फले ।



यस्थितत्वाद् हृदयेशः ॥ ५५ ॥ यतः सर्वमुपासकहृद्गतमपि स्वभावत एव जानाति अतः तत्काले उपासनारम्भकाले एव । अत्रार्तार्थिनोरपि नैव सत्वरं फलं प्रयच्छति किन्तु कर्मपरिपाकानन्तरमित्याह-आर्त्तमिति । तदर्थेन कामितार्थेन ॥ ५६ ॥ स्वनियतिः स्वकृतः इदमित्थं भवेदिति संकल्पः । तया युतः तामनुल्लंघ्येति यावत् । कर्मपाकमिति । अत्रेदमवधेयम् । कर्मणः पाकः फलप्रदानसामर्थ्यम् । तच्च क्वचित् कर्मणः कालविशेषकृतम् , क्वचित् कर्मान्तरसहकारकृतम् । कर्मान्तरसहकृतमेवोत्कटं कर्मेत्युच्यते । यदुक्तं शिवागमे । कर्मणः परिपाकस्तु कालात् कर्मान्तरादपीति । अन्यत्रापि । अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इति । एवंविधकर्मपाकं प्रतीक्ष्येत्यर्थः । स्वं स्वीयमित्यर्थः ॥ ५७ ॥ तं स्वीयं ज्ञात्वा । सर्वात्मना मनोवागादिभिः योगक्षेमवहः । अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य रक्षणं क्षेमः । एतदुभयन्तस्य स्वयमेव करोतीति भावः । नियतिरिति प्रारब्धोपलक्षकम् । नियतिं प्रारब्धं च विधूयेत्यर्थः ॥ ५८ ॥ तस्य निष्कामिनो यत् साधनं तत् विज्ञापन-

एतदेव महेशत्वं स्वातन्त्र्यमहतन्तु यत् ॥ ५९ ॥
प्रारब्धं नियतिर्वापि महेशाविमुखं भवेत् ।
एतन्मृकण्डुतनयेऽत्यन्तमीश्वरतत्परे ॥ ६० ॥
सर्वैर्ज्ञातं महेशस्य नियत्यारब्धलङ्घनम् ।
अत्रोपपत्तिन्ते वक्ष्ये शृणु प्राणप्रियेरितम् ॥ ६१ ॥
यद्यप्यनुल्लङ्घनीये प्रारब्धनियती खलु ।
तथाप्यपौरुषाणां तत् प्रारब्धमनपोहनम् ॥ ६२ ॥
अतएव प्राणायमैः प्रारब्धं परिजीयते ।
न तान् दृष्टेषु दुःखेषु प्रारब्धं योजयत्यलम् ॥ ६३ ॥
प्रारब्धाहिनिर्गीर्णास्ते ये पौरुषपराङ्मुखाः ।

---

यनेन सम्यक् प्रसाध्य । ननु नियतिः सर्वथाऽनुल्लंघनीयेति चेदाह–एतदेवेति । नियत्यादेरुल्लंघनमेवेत्यर्थः ॥ ५९ ॥ ननु प्रारब्धनियत्योरप्युल्लंघने प्रारब्धं नो नाशमियात् नियतिर्नान्यथा भवेदित्याद्यागमविरोध इति चेदाह–प्रारब्धमिति । महेशाविमुख एव ' प्रारब्धनियत्योर्माहात्म्यमित्यागमतात्पर्यमिति भावः । न तदागमैकसिद्धं किन्त्वैतिह्यसिद्धमपीत्याह–एतदिति ॥६०॥ नियत्यारब्धयोर्लङ्घनम् । अत्र अनुल्लङ्घ्यप्रारब्धनियत्युल्लङ्घने । उपपत्तिं युक्तिम् ॥ ६१ ॥ अपौरुषाणां पुरुषयत्नरहितानाम् ॥ ६२ ॥ कुत एतादिति चेदाह–अत एवेति । प्राणायामैः प्राणायामपरैर्योगिभिः कथमेतज्ज्ञातमिति चेत् प्रत्यक्षेणेत्याह–न तानिति ॥ ६३ ॥ कुत एवं पौरुषात् प्रारब्धपराभव इति चेत्तथैव नियतिस्वभावादित्याह–तदिति । पौरुषेण प्रारब्धापोहनापित्यर्थः । तथैवेति । अनुभवानुरोधेन नियतेः कल्प-

एतन्नियतिसंक्लृप्तं तथैवानुभवान्ननु ॥ ६४ ॥
नियतिः स्यादीशशक्तिः सङ्कल्पैकस्वरूपिणी ।
सत्यसङ्कल्प एवेशो ऽनुल्लङ्घ्या ह्यत एव सा ॥ ६५ ॥
कुण्ठिता सापि भवति परमेशपरायणे ।
अकुण्ठितापि भवति यतः सा तादृशी भवेत् ॥६६॥
तस्मात् कुतर्कं सन्त्यज्य महेशं शरणीकुरु ।
अहेतुकतया स त्वां नियोजयति श्रेयसि ॥ ६७ ॥
एतावदेव सोपानं प्रथमं क्षेमसाधकम् ।
एतद्विधाय चान्यत्र नास्तीषत्फलसम्भवः ॥ ६८ ॥
श्रुत्वेत्थं वचनं राम हेमचूडः प्रियोदितम् ।
पप्रच्छ भूयस्तां कान्तामतिहृष्टमनास्तदा ॥ ६९ ॥

---

नीयत्वादिति भावः ॥ ६४ ॥ अतएव सत्यसङ्कल्पादेव ॥६५॥ सापि अनुल्लङ्घ्या नियतिरपि । नन्वनुल्लङ्घ्यत्वं कुण्ठितत्वमित्युभयं विरुद्धमिति चेदाह—अकुण्ठितेति । यतः सा नियतिः तादृशी परमेशपरायणे कुण्ठितस्वभावैव । अयं भावः । प्रारब्धं हि फलोन्मुखं कर्म तच्च योगिना जीयत इति तथैव तन्नियत्या नियतं परिकल्प्यते । प्रकृतेर्निष्काम्युपासकोऽपि कर्मयोगित्वेन योगी भवेदित्यनेनापि तज्जीयते । तथा च प्रारब्धमयोगिन एवानुल्लङ्घ्यम् । नियतिश्च भगवत्सङ्कल्परूपा सा सर्वथानुल्लङ्घ्यस्वभावैव । तथापि भगवत्परायणे सा कुण्ठिता भवतीति च तस्याः स्वभाव एवेति सा सर्वत्राकुण्ठितैवेति ॥ ६६ ॥ यस्माद्भगवत्परे प्रारब्धनियत्योरप्यनन्तरायत्वं तस्मात् । अहेतुकतया निष्कामत्वेन । सः महेशः ॥ ६७ ॥ एतावदेव अहेतुकत्वेनोपास-

प्रिये महेश्वरं ब्रूहि यः शरण्यो भवेन्मम।
सर्वकर्त्ता स्वतन्त्रात्मा यच्छक्त्या नियतं जगत् ॥७०॥
तं विष्णुमाहुः केचिद्वै केचित् शिवगणेश्वरम्।
तथा सूर्यं नृसिंहादीन् बुद्धं सुगतमेव च ॥ ७१ ॥
अर्हन्तं वासुदेवञ्च प्राणं सोमञ्च पावकम्।
कर्म प्रधानमणव इत्यादि बहुधा जगुः ॥ ७२ ॥
जगत्कारणरूपं वै विचित्रमतभेदितम्।
तत्र क्वेश्वरबुद्धिस्तु कर्त्तव्या तत् समीरय ॥ ७३ ॥
न तेह्यविदितं किञ्चिद् भवेदिति हि निश्चयः।
यतः स भगवान् व्याघ्रपादो दृष्टपरावरः ॥ ७४ ॥
अतस्ते योषितोऽप्येवं ज्ञानमेतद्विराजते।
ब्रूहि मे श्रद्दधानाय प्रियामृतप्रभाषिणी ॥७५॥
पृष्टैवं सा हेमलेखा प्रियेण प्राह हर्षिता।
नाथ ते सम्प्रवक्ष्यामि शृण्वीश्वरविनिर्णयम् ॥७६॥

---

नमेत्र । अन्यत्र साधने ॥ ६८ ॥ ६९ ॥ एवं जगदादिकर्त्ता परमेश्वरः सेव्य इति श्रुत्वा कर्त्तुर्हि शरीरवत्त्वं नियतमिति म-त्वा शिवादिशरीरिषु ईश्वरत्वं क त्वया निश्चितमिति पृच्छति-प्रिये इत्यादि । नियतं क्लृप्तम् ॥ ७० ॥ कुतस्तवात्र शङ्केति चेत्त-त्रापि शास्त्रानैक्यादित्याह—बुद्ध मिति। बुद्धं सुगतं च बौद्धैकदेशिनः ॥७१॥ अर्हन्तं जैना आहुः । वासुदेवं पाञ्चरात्राः । प्राणादीन् प्राणाद्युपासकाः । कर्मादीनां कर्त्तृत्वं प्राक् परिहृतं तथापि प्र-सङ्गात् पुनस्तद्ग्रहणम् ॥ ७२ ॥ एवं जगतः कारणस्य कर्त्तुः स्व-रूपं विचित्रमतभेदितं अत आह । तत्रेति ॥ ७३ ॥ व्याघ्रपादः

ईश्वरो हि जगज्जालप्रलयोत्पादकृद् भवेत् ।
स विष्णुः स शिवो धाता स सूर्यः सोम एव च ॥७७॥
स एव सर्वथा सर्वः सर्वैरपि निरूपितः ।
न शिवो नापि विष्णुर्वा न धाता नान्य एव च ॥७८॥
एतत्ते सम्प्रवक्ष्यामि शृणवत्यन्तसमाहितः ।
कर्त्तारं शिवमाहुस्ते पञ्चवक्त्रं त्रिलोचनम् ॥ ७९ ॥
स कर्त्ता घटकर्त्तेव चेतनः सशरीरकः ।
लोकेऽपि चेतनः कर्त्ता सशरीरो हि दृश्यते ॥ ८० ॥
अशरीरोऽचेतनो वा न कर्त्ता क्वचिदीक्षितः ।
तत्र मुख्यं हि कर्त्तृत्वं चेतनस्यैव सम्भवेत् ॥ ८१ ॥
यतः स्वप्नेष्वयं जीवो हित्वा स्थूलं शरीरकम् ।
चैतन्यमयदेहेन सर्वानभिमतान् सृजेत् ॥ ८२ ॥

---

ते पिता ॥ ७४ ॥ अतः तत्सम्बन्धात् ॥ ७५ ॥ ७६ ॥ ७७ ॥ सर्वैः वैष्णवाद्यैः निरूपितः सर्वोऽपि विष्णुशिवादिः स एव विष्णुशिवादिमूर्त्तिषु सर्वत्रानुगतं परमेश्वरं स्वतन्त्रचिद्रूपमिति सर्वात्मतां तस्योक्त्वा परस्परं व्यावृत्तं दृश्यं स्थूलशरीरं न तस्य वास्तवं रूपमिति निषेधति । न शिव इत्यादि ॥ ७८ ॥ एतत् शिवो न शिवश्चेत्येतत् । ते शैवाः ॥ ७९ ॥ सः स्थूलशरीरसहकृतः । कुत एवमिति चोद्यमुद्भाव्याह—लोक इति । कर्त्ता कुलालादिः ॥८०॥ एवं शरीरविशिष्टचेतनस्यैव कर्त्तृत्वमीक्षितम् । तथापि तत्र शरीरचेतनयोर्मध्ये ॥८१॥ कुत एवमिति चेद्भौतिकदेहस्य व्यभिचाराच्च कर्त्तृत्वमित्याह—स्वप्नेष्विति । स्वाप्नो देहो

अतः शरीरं करणं कार्ये कर्त्तुश्चिदात्मनः ।
जीवानां करणापेक्षा यतोऽपूर्णा स्वतन्त्रता ॥ ८३ ॥
भगवांस्तु जगतकर्त्ता पूर्णस्वातन्त्र्ययोगतः ।
अनपेक्ष्यैव यत्किञ्चित् सृजत्यविकलं जगत् ॥ ८४ ॥
अतः शरीरं नास्त्येव ह्येष मुख्यविनिश्चयः ।
अन्यथा लोकवत्कर्त्तुरुपादानाश्रयो भवेत् ॥ ८५ ॥
तथा च देशकालादिकारणप्रचयैर्युतः ।
जगत् सृजन्महेशानो जीव एव भवेत्तथा ॥ ८६ ॥
पूर्णैश्वर्यं विहन्येत जगत्सृष्टेः पुरापि च ।

---

नैवंविध इत्याह—चैतन्येति ॥ ८२ ॥ अतः स्थूलशरीरं विनापि कार्यसम्भवेन व्यभिचारात् । अस्तु करणत्वेऽपि स्थूलं चिन्मयं वा शरीरमीश्वरस्यापेक्षितमिति चेन्नेत्याह—जीवानामिति । ॥ ८३ ॥ जीवानामपूर्णस्वातन्त्र्येण करणाद्यपेक्षायामपि न पूर्णस्वातन्त्र्यस्येश्वरस्य यत्किञ्चिदपेक्षेत्याह—भगवानिति । अविकलम् सम्पूर्णम् ॥८४॥ अतःशरीरकल्पने प्रयोजनाभावात् । अन्यथा कुलालादिवत् करणाद्यपेक्षत्वे । कर्त्तुः ईश्वरस्य उपादानस्याप्याश्रयः अपेक्षा भवेत् ॥ ८५ ॥ प्रचयैः समूहैः सामग्र्येति यावत् । जीव एव भवेत् ईश्वरत्वं विहन्येतेति भावः । तथा कुलालादिवत् ॥ ८६ ॥ इष्टापत्तावाह—जगदिति । उपादानादिकजगत्सृष्टेः पूर्वमपि सिद्ध्येत् ईश्वरस्य जगत्क्रियायां उपादानाद्यपेक्षणे उपादानादेर्नित्यता सिद्धेति भावः । तत् उपादानादिकम् । अस्त्विति चेदाह—सर्वकर्तृत्वमिति । उपादानादेः सृष्टेः पूर्वं सिद्धत्वेन तं प्रत्यकर्त्तृत्वेन सर्वकर्त्तृ-

सिद्ध्येत्तत्सर्वकर्तृत्वं विहतं स्यान्न संशयः ॥ ८७ ॥

---

त्वं विहन्येतेत्यर्थः । तथा च कर्तुर्निमित्तत्वेनोपादानत्वाभावेने-श्वरत्वमेव न सङ्गच्छेत इति भावः । यदुक्तं क्षेमराजाचार्यैः— 'ये त्वीश्वरं व्यपादिशन्ति निमित्तहेतुं दत्तस्तिलाञ्जलिरमीभिरिहे-शितायै । अन्याकृतोपगमनेन वशीकृतस्य कामीश्वरस्थितिम-मी बत सङ्गिरन्ते' इति । अथ च न हीश्वरस्य केवलनित्यत्वे कार्यं सम्भवितुमर्हति । तथा हि । सृष्टेः पुरा विशरारवः परमाणवः ईश्वरेच्छया संघटिताः कार्यारम्भका भवन्तीति ह्यारम्भवादिन आहुः । नैतदुपपन्नम् । लोके चेतनो ह्यन्येच्छामनुरुध्य किञ्चित् करोति नाचेतनः । तथा च परमाणूनामीश्वरेच्छानुरोधोऽनुपपन्न एव । नन्वीश्वरस्यैवंविधमेव सामर्थ्यम्, यत् परमाणवोऽपि तदिच्छामनुरुध्येरन्निति । सत्यमेतत्, ईश्वरोऽपरिच्छिन्नसामर्थ्य एव । तेनैवालौकिकसामर्थ्येन भगवानुपादानाद्यनपेक्ष्यैव जगत्-क्रियासमर्थः । एवं सत्यपि भगवतो जगत्क्रियायां परमाण्वा-द्यपेक्षाभ्युपगमः द्वैतवादश्रद्धामात्रविलास इति ज्ञेयम् । एतेन सेश्व-रसांख्योऽपि प्रत्युक्तो ज्ञेयः । अस्माकमागमैकसमाश्रयाणामभ्यु-पगताखिलव्यवहारसमर्थनसमर्थपरमेश्वरैश्वर्याणां नानुपपत्तिग-न्धोऽपि ।

ननु वैषम्यनैर्घृण्यदोषदूरीकरणाय जगत्क्रियायां कर्म निमित्तमिति सर्वैरभ्युपेयम् । तथा चान्यापेक्षेश्वरस्य सिद्धेति चेदुच्यते । सत्यमेतदप्रतिसमाधेयमेव द्वैतवादिनाम् । अद्वैतवादि-नामस्माकं तु दर्पणप्रतिबिम्बन्यायेन सर्वस्य जगतश्चिदेकरसत्वेन कर्मणोऽपि परमेश्वरस्वरूपानन्यत्वेनान्यानपेक्षणान्न दोषावकाश-

अतो हि दृश्यदेहाद्यमनपेक्ष्य जगत् सृजेत् ।
नास्ति तस्मात् स्थूलदेहो वस्तुतः प्राणवल्लभ ॥ ८८॥

पररूपे ह्यदेहेऽस्मिन् मुह्यन्ति स्थूलबुद्धयः ।
भक्तियुक्ताश्च तैर्ध्यातो यत्र यत्र यथा यथा ॥ ८९ ॥

तथा धत्ते ऽनेकरूपं भक्तचिन्तामणिः स्वयम् ।
अतश्चेतन एतेन तद्देहः स्याच्चितिः परा ॥ ९० ॥

चितिरेव महासत्ता सम्राज्ञी परमेश्वरी ।
त्रिपुरा भासते यस्यामविभिन्ना विभिन्नवत् ॥९१॥

---

लेशोऽपि। नन्वेवमपि घटादिकर्तृत्वस्य कुलालादिनिष्ठत्वान्नेश्वरः सर्वकर्तेति चेन्न । कुलालात्मन ईश्वरानन्यत्वेनादोषात् । अथ च राजपुरुषकृते राजकृतत्ववद् ब्रह्मादिकृतस्यापीश्वरकृतत्वात् । तदुक्तं प्रत्यभिज्ञायाम्–तथा हि कुम्भकारोऽसावैश्वर्यव्यवस्थाया तत्तन्मृदादिसंस्कारक्रमेण जनयेत् घटमिति ॥ ८७ ॥ अतः शरीराद्यपेक्षायामैश्वर्यविहतेः ॥८८॥ ननु यदि वस्तुतः देहो नास्ति तर्हि कुतोऽयं विष्ण्वादिदेहः इति चेदाह–परेति। अस्मिन् ईश्वरे । मुह्यन्ति मोहं प्राप्नुवन्ति न विदन्तीति यावत् । एवंविधा भक्तियुक्ताश्च । यत्र यत्र कैलासवैकुण्ठादिदेशे । यथा यथा पञ्चवक्त्रैकवक्त्रादिरूपेण ॥ ८९ ॥ स्वयमिति । न मातृपित्राद्यपेक्षयेति भावः । अतः एवंविधदेहानामिच्छामात्रपरिकल्पितत्वात् । परा अपरिच्छिन्ना चितिः ॥ ९० ॥ चितिरेवेति । चितिर्हि स्वरूपपरिनिष्ठिता निस्तरङ्गाविधकल्पा तु-

आदर्शनगरप्रख्यं जगदेतच्चराचरम् ।
तद्रूपैकत्वतस्तत्र नोत्तमाधमभावना ॥ ९२ ॥
अपरे तु स्वरूपे हि कल्पितं मुख्यतादि हि ।
तस्मात् प्राज्ञ उपासीत परं रूपं हि निष्कलम् ॥९३॥
असमर्थः स्थूलरूपं यद्बुद्धौ सङ्गतं दृढम् ।

---

रीया त्रिपुरा । सैव यदा स्वस्वातन्त्र्याच्चितिक्रियाकर्तृत्वरूपचेतनामासादयति तदेश्वर इत्युच्यते । कार्यं ब्रह्मेति यं वेदान्तिन आहुः । सा चितिर्महासत्ता अपरिच्छिन्नसद्रूपा । सम्राज्ञी स्वतन्त्रा । परमेश्वरी अनुत्तरैश्वर्यवती । त्रिपुरा तुर्या । भासते अविशेषात् सर्वत्र सर्वदेत्यर्थः ॥ ९१ ॥ ननु सा चितिः क्वचिद्भासते किन्तु जगदेव भासत इति चेदाह–आदर्शेति । यथा ह्यादर्शाविभिन्नमपि प्रतिबिम्बनगरमादर्शे भिन्नवद्भासते एवमस्यां चितिश्चराचरात्मकं जगत्तदभिन्नमपि विभिन्नवद्भासते । यथा हि बालाः प्रतिबिम्बं पश्यन्तो दर्पणं न विदुरेवं मूढा जगत् पश्यन्तोऽपि न चितिं विदुः । एवञ्च विष्णुशिवादिष्वपीयमेवेश्वराख्या एका, अतः तत्र विष्णुशिवादौ नोत्तमाधमभावना कर्त्तव्या ॥ ९२ ॥ ननु शास्त्रेषूत्तमत्वादि कथमुक्तमिति चेदाह–अपरे इति । स्थूले । तस्मात् यतः सा मुख्यता कल्पिता न वास्तवी । निष्कलमशरीरम् ॥९३॥ ननु तद्रूपं प्राज्ञेनोपासितुं शक्यमन्येन किं कर्त्तव्यमिति चेदाह–असमर्थ इति । यद्बुद्धौ दृढं सङ्गतमिति । यद्रूपे बुद्धिर्दृढानुरक्ता सा मूर्तिरुपास्येति भावः । अन्यथा ईश्वरमनाराध्य । गतिः प-

तदुपास्या हेतुतस्तु श्रेयः प्राप्नोत्यनुत्तमम् ॥ ९४ ॥
नान्यथास्य गतिः क्वापि भवेद्वै कोटिजन्मभिः ॥९५॥

इति श्रीमज्ज्ञानखण्डे हेमचूडोपाख्याने ईश्वरस्वरूप-
निरूपणं सप्तमोऽध्यायः ।

---

२श्रेयःसाधनप्राप्तिः । षट्चरणः श्लोकः ॥ ९४ ॥
इति श्रीतात्पर्यदीपिकायां सप्तमोऽध्यायः ॥

# अष्टमोऽध्यायः ।

एवं प्रियावचः श्रुत्वा ज्ञात्वा तत्त्वं महेशितुः ।
त्रैपुरं चिन्मयं हेमलेखावाक्येन निश्चितम् ॥ १ ॥
आश्वस्तचित्तस्त्रिपुरां गुणरूपां महेश्वरीम् ।
ज्ञात्वा गुरुभ्यः परमां माहेश्वर्यविभावितः ॥ २ ॥
तामेकभावानुगतो हेमचूडोऽभवद् दृढम् ।
एवं परोपासनेन व्यतीयुः केऽपि मासकाः ॥ ३ ॥
त्रिपुरा परमेशानी प्रसादमकरोद् हृदि ।
विषयाद्विमुखं चित्तं विचारपरमं बभौ ॥ ४ ॥
एतावद् दुर्लभं लोके परानुग्रहमन्तरा ।
विचारप्रवणं चित्तं यन्मुख्यं मोक्षकारणम् ॥ ५ ॥

---

अत्राध्याये भागमितपद्यैः स्तुत्वा विरागताम् ।
हेमलेखोक्तिगूढार्थव्याख्यानं सुनिरूप्यते ॥ १ ॥

त्रैपुरं तुर्यम् । तद्रूपं चिन्मयमेवेश्वरस्य तत्त्वमिति परोक्षतया ज्ञात्वा ॥ १ ॥ गुणरूपाम् सगुणमूर्त्तिम् । गुरुभ्यः तन्मन्त्रादिकं च ज्ञात्वेति शेषः। माहेश्वर्यविभावितः परमेश्वरानुग्रहशक्तिविद्धः। एतदुक्तम्–ईशानुग्रह एवैकः सद्गुरुसमागम इति ॥ २ ॥ एकभावो दृढभक्तिः अनुगतिरुपासनम् ॥ ३ ॥ किंविधं प्रसादमकरोत्तदाह–विषयादिति । विचारपरमम् स्वरूपविचारतत्परम् ॥ ४ ॥ एतावत् विषयवैमुख्यपूर्वकं विचारप्रवणत्वम्, कुत

राम यावन्न जायेत विचारपरमं मनः ।
न तावच्छ्रेयसा योग उपायानां शतैः क्वचित् ॥ ६ ॥
अथ भूयः स कस्मिंश्चिद्दिने रहसि वै तया ।
सङ्गतः प्रिययाऽत्यन्तविचारपरमानसः ॥ ७ ॥
आयान्तं स्वनिकेतं तं दूरात् कान्तं ददर्श सा ।
उत्थाय तं समानीय स्वासने विनिवेश्य च ॥ ८ ॥
पादप्रक्षालनाद्यैस्तं पूजयित्वा यथाविधि ।
प्रोवाचामृतनिष्यन्दसुन्दरं परमं वचः ॥ ९ ॥
प्रेष्ठ ! त्वामद्य पश्यामि चिराय ननु ते वपुः ।
नीरुजं कच्चिदासीद्धै यतो रोगास्पदं वपुः ॥ १० ॥
तन्मामाचक्ष्व वृत्तान्तं यतो नाहं स्मृता त्वया ।
ननु मामसमालोक्य चाप्रभाष्य कदापि ते ॥ ११ ॥
नात्यगाद्दिनभागोऽपि तदेवं कुत आस्थितम् ।
मन्येऽहं तेऽनभिमते वर्त्तनं नहि वर्त्मनि ॥ १२ ॥
स्वप्ने वापि कुतोऽन्यत्र कुत एवमभूद्वद ।
कथं रात्रिस्त्वया नीता चैकापि युगसम्मिता ॥१३॥

---

एतस्य दुर्लभता तदाह—यदिति ॥ ५ ॥ ६ ॥ अथ विचारपरता-सम्पत्त्यनन्तरम् ॥ ७ ॥ निकेतम् गृहम् ॥ ८ ॥ ९ ॥ प्रेष्ठ अतिप्रियतम ॥ १० ॥ तत् शरीरवृत्तान्तम् । कुतस्तवेयं सम्भावनेति चेदाह—यत इति ॥ ११ ॥ एवं मामस्मृत्वा वा त्वया आस्थितं तत् कुतः । स्वप्नेऽपि न मन्ये ॥ १२ ॥ अन्यत्र जाग्रति कुत एतत्सम्भावनेति भावः । एवं सति कुत एवं ते स्थितिरभूत्॥ १३

विना मां च क्षणोऽप्येको युगकल्पः सुदुःसहः ।
इत्युक्त्वा सा समाश्लिष्य खिन्नेवाभूत् क्षणं ततः ॥१४॥
सोऽपि प्रियासमाश्लिष्टो नैषद्विकृतिमाययौ ।
प्राह प्रिये न मामेवं विमोहयितुमर्हसि ॥ १५ ॥
ज्ञाता मयाऽसि सुदृढं नास्ति ते शोककारणम् ।
परावरज्ञा त्वं धीरा मोहस्त्वां वै कथं स्पृशेत् ॥१६॥
तत्त्वां प्रष्टुं समायातो यत्तद्वक्ष्यामि संश्रृणु ।
यत् प्राक् स्ववृत्तं कथितं तत् स्फुटं मे समीरय ॥१७॥
का सा ते जननी प्रोक्ता सखी वा तत्पतिश्च कः ।
तत् पुत्राद्या अपि च के मम वा ते क संवद ॥ १८ ॥
न तन्मया सविदितं न तन्मन्ये मृषोदितम् ।
किन्तु त्वया निगदितं व्यपदेशेन सर्वथा ॥ १९ ॥
तद्विविच्य प्रकथय यथा ज्ञास्ये त्वहं स्फुटम् ।
अहं त्वां सुप्रसन्नोऽस्मि छिन्धि मे हृदि संशयम् ॥२०॥
एवमुक्ता हेमलेखा प्रसन्नवदनेक्षणा ।
मत्वा सुनिर्मलधियं परानुग्रहसंयुतम् ॥ २१ ॥

---

मां विना क्षणमपि सुदुःसहमिति ॥ १४ ॥ दृढवैराग्येन नैषोऽपि प्रियाश्लेषादिना विकृतिं प्राप्तवान् । मामियं मोहयितुं प्रवृत्तेति ज्ञात्वाऽऽह–प्रिये इति ॥ १५ ॥ कुतस्त्वद्वियोगे शोको न भवेत्तदाह–परावरेति ॥१६॥ नाहं प्रागिव क्रीडितुं समागत इत्याह–तत्त्वामिति । महासती मे जननीत्यादि प्रागुक्तं स्ववृत्तम् ॥१७॥ ते जनन्यादयः ॥ १८ ॥ तत् त्वदुक्तं न तन्मृषोदितम्, किन्त्वन्यव्यपदेशेनोक्तम् ॥ १९ ॥ २० ॥ परायास्त्रिपुरायाः अनुग्रह-

नूनमेषोऽतिविमुखो विषयेभ्योऽतिधैर्यतः ।
विष्णुशक्त्या महेशान्या फलितः पुण्यसञ्चयः॥ २२ ॥
कालः प्रबोधने चायं बोधयामि ततस्त्वमम् ।
नाथ तेऽहो महाभाग्यं प्राप्तमीशकृपावशात्॥ २३ ॥
अन्यथा नैव विषयवैरस्यं पश्यति क्वचित् ।
एतल्लक्षणमीशस्यानुग्रहे ज्ञेयमादितः ॥ २४ ॥
भोगवैरस्यमपरं विचारप्रवणं मनः ।
हन्त ते सम्प्रवक्ष्यामि वृत्तिं प्रोक्तां सदात्मनः ॥२५॥
परा चिति में जननी सखी बुद्धिर्मता मम ।
अविद्या त्वसती सोक्ता यया बुद्धिः सुसङ्गता ॥२६॥
अविद्यायास्तु सामर्थ्यं लोके स्पष्टं विचित्रितम् ।
यद्रज्जौ सर्पमाभास्य महाभीतिं प्रयच्छति ॥ २७ ॥
महामोहस्तु तत्पुत्रो मनस्तस्य सुतोऽभवत् ।
तस्य पत्नी कल्पना स्यात्तत्सुताः पञ्च येऽभवन् ॥२८॥
ज्ञानेन्द्रियाणि ते पञ्च तत्स्थानं गोलकं भवेत् ।
विषयाणां प्रमोषस्तु संस्कारो मनसो भवेत् ॥ २९ ॥

---

युतम् ॥ २१ ॥ अनुग्रहशक्त्या ॥ २२ ॥ यतोऽयं बोधने कालस्ततः इति मत्वा प्राहेति शेषः । ते त्वया ॥ २३ ॥ अन्यथा भाग्याभावे क्वचित् कालादौ । एतत् वक्ष्यमाणम् लक्षणम् ज्ञापकम् । आदित इति । ईशानुग्रहे सत्यादावेव तज्जायत इति भावः ॥ २४ ॥ अपरम् द्वितीयम् । वृत्तिम् स्थितिम्, सदा स्थितामिति शेषः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ तद्योगः

तद्भोगः स्वप्नभोगः स्यात् कल्पनायाः स्वसा तु या ।
महाशना भवेदाशा तस्या यौ तनुजावुभौ ॥ ३० ॥
क्रोधो लोभश्च तावुक्तौ तत्पुरन्तु शरीरकम् ।
मम यस्तु महामन्त्रः स्वरूपस्फुरणं हि तत् ॥ ३१ ॥
प्राणप्रचारः सम्प्रोक्तो मनसस्तु प्रियः सखा ।
कान्ताराद्यास्तु नवका एवं सर्वं प्रकीर्त्तितम् ॥ ३२ ॥
मया बुद्धेः सङ्गमस्तु समाधिराभिधीयते ।
मन्मातृलोकसंप्राप्तिर्मोक्षः प्रिय उदाहृतः ॥ ३३ ॥
एवं प्रोक्तः स्ववृत्तान्तस्त्वमप्येवम्विधौ ननु ।
तद्युक्त्यैतत् सुविज्ञाय परं श्रेयः समाप्नुहि ॥ ३४ ॥

इति श्रीमज्ज्ञानखण्डे हेमचूडोपाख्याने संसा-
राख्यायिकाविवरणे अष्टमोऽध्यायः ।

---

प्रमुषितविषयभोगः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ एतत् स्व-
वृत्तान्तम् ॥ ३४ ॥

इति श्री त्रि० ज्ञा० व्याख्यायां तात्पर्यदीपिकायामष्टमोऽध्यायः ।

कथं मुने देहमिममुत्सृजामि समीरय ।
उत्सृजामि यदि बलान्नाशमेष्यामि सर्वथा ॥ ७५ ॥
एवं वदन्तं नृपतिं प्रहस्याह मुनेः सुतः ।
अहो योगानभिज्ञोऽसि चाऽस्तु नेत्रे निमीलय ॥७६॥
इत्युक्त्वा मीलिताक्षं तं प्रविश्य निमिषार्द्धतः ।
आकृष्य तल्लिङ्गतनुं क्षिप्त्वा श्वभ्रे च तत्तनुम् ॥७७॥
योगसामर्थ्यतः शैले निविश्य नृपसंयुतः ।
सुषुप्तं देहवैकल्यात् स्वसङ्कल्पोत्थदेहके॥ ७८ ॥
संयोज्य बोधयामास प्रबुद्धो नृपतिस्तदा ।
गृहीतं मुनिनाऽपश्यत स्वं महागगने तदा ॥ ७९ ॥
ऊर्द्धं विष्वक् च संपश्यन् नभो भीममनन्तकम् ।
भीतः प्राह मुनेः पुत्रं मुने मां न परित्यज ॥ ८० ॥
परित्यक्तो विनश्यामि पतिष्येऽहं निराश्रये ।
इति भीतं नृपं दृष्ट्वा प्रहस्याऽऽह मुनेः सुतः ॥ ८१ ॥

---

दिभ्यो रक्षणाय तृणसंवृते इति ॥ ७३ ॥ देहान्निर्गमे ॥ ७४ ॥ बलात् श्वासप्रतिरोधकजिह्वोत्पाटनादिना ॥ ७५ ॥ ७६ ॥ तं राजदेहम् । तत्तनुं राज्ञः स्थूलतनुम् ॥ ७७ ॥ स्थूलदेहवैकल्यात् । स्थूले स्वसङ्कल्पोत्थान्यदेहके ॥ ७८ ॥ लिङ्गदेहं संयोज्य । ननु प्राक् राजपुत्रादयः कथं स्थूलदेहयुता नीता इति चेदुच्यते–ते हि सुषुप्ता एव शैललोके नीताः । जाग्रतः स्वाभाविकस्थूलदेहवतो ऽयोगिनस्तल्लोकावलोकनमशक्यमित्येव तद्योगसामर्थ्यमिति पूर्वोत्तरग्रन्थार्थसिद्धोऽभिप्रायो ज्ञेयः॥७९॥

परित्यज भयं भूप नोत्सृजामि निशामय ।
एनं शैलान्तरस्थानं लोकं धैर्येण सर्वतः ॥ ८२ ॥
अथ धैर्यं समालम्ब्य नृपः समवलोकयन् ।
अधो दूरे सनक्षत्रमभ्रमन्धतमोवृतम् ॥ ८३ ॥
प्रविश्य तं देशमपि ततोऽधस्तात् प्रपश्यत ।
चन्द्रमण्डलमास्फीतं तत्राऽऽगत्य जडीकृतः ॥ ८४ ॥
चन्द्रमण्डलशीतेन मुनिपुत्रेण रक्षितः ।
अथ प्राप्य सूर्यलोकं तत्करैरभितापितः ॥ ८५ ॥
मुनिपुत्रेण योगेन शिशिरीकृतदेहकः ।
अपश्यल्लोकमखिलं स्वलोकप्रतिबिम्बवत् ॥ ८६ ॥
अथ शृङ्गे हेमगिरेर्मुनिना सह संस्थितः ।
मुनिप्रदर्शितं सर्वमपश्यत् पृथिवीपतिः ॥ ८७ ॥
देशान्तरावलोकाय मुनिदत्तशुभेक्षणः ।
अपश्यद्वलयात्मानं लोकालोकाख्यपर्वतम् ॥ ८८ ॥
तद्बहिर्ध्वान्तसन्दोहमन्तःसौवर्णमेदिनीम् ।
समुद्रान् सप्तद्वीपांश्च नदीगिरिसमाकुलान् ॥८९॥

---

विष्वक् परितः ॥ ८० ॥ ८१ ॥ निशामय पश्य । लोकं प्राणिसमुदायम् ॥ ८२ ॥ अथ मुनिवाक्यश्रवणानन्तरम् । अभ्रमाकाशम् । अन्धतमोवृतमिति । नक्षत्रलोकोपर्यन्धकारस्य सर्वबाह्यस्य विद्यमानत्वादिति भावः ॥ ८३ ॥ तं देशं नक्षत्रदेशम् ॥ ८४ ॥ ८५ ॥ प्रतिबिम्बवत् स्थितम् ॥ ८६ ॥ ॥ ८७ ॥ दूरसान्तरयोर्देशयोरवलोकनायाशुभेक्षणोऽप्रतिहतनेत्रः ॥ ८८ ॥ तद्बहिः लोकालोकबहिरन्तः लोकालोका-

भुवनान्यापि सर्वाणि चन्द्राद्यान् विबुधोत्तमान् ।
दैत्यान् मनुष्यान् रक्षांसि यक्षकिंपुरुषादिकान् ॥९०॥
तत्राऽपश्यत् सत्यलोके वैकुण्ठे राजते नगे ।
मुनिपुत्रं स्वमात्मानं ब्रह्म विष्णुशिवात्मना ॥ ९१ ॥
विभज्य संस्थितं सर्वलोकं सृष्ट्यादिहेतवे ।
अथोऽपश्यद् भूविभागे कृत्वा रूपान्तरं तथा ॥९२॥
प्रशासनपरो भूमेः सार्वभौमत्वमास्थितः ।
एवं मुनिकुमारस्य दृष्ट्वा योगर्द्धिमुत्तमम् ॥ ९३ ॥
विस्मितोऽभून्महासेनस्ततः प्राह मुनेः सुतः ।
राजन्नेतल्लोकजातं पश्यतः काल अत्यगात् ॥ ९४ ॥
अर्बुदानां द्वादशकामितोऽप्यत्र दिनात्मकः ।
गच्छावो बाह्यलोकं तं यत्रास्ते जनको मम ॥९५॥
इत्युक्त्वा भूभृता तेन सह भूयः समागतः ।
पूर्ववत्तं गण्डशैलान्निर्गत्याभ्याययौ बहिः ॥ ९६ ॥

इति श्रीम० ज्ञानखण्डे गण्डशैललोकावलोकने
द्वादशोऽध्यायः ॥

---

न्तः ॥ ८९ ॥ ९० ॥ ९१ ॥ भूविभागे भूलोके ॥ ९२ ॥ योगर्द्धिं योगैश्वर्यम् ॥९३॥ ततः स्वलोकप्रदर्शनानन्तरम् ॥९४॥ बहिर्लोके द्वादशार्बुदवर्षमितोऽप्यत्र लोके एकदिनात्मकः ॥९५॥ भूभृता राज्ञा ॥ ९६ ॥

इति श्रीतात्पर्यदीपिकायां द्वादशोऽध्यायः ॥

# त्रयोदशोऽध्यायः ।



मुनिपुत्रः पुनः शैलान्महासेने विनिर्गते ।
विधाय मूर्च्छितं लिङ्गदेहं संस्कारमात्रकम् ॥१॥
समादाय विनिर्गत्य प्राक्षिपत्तच्छरीरके ।
उत्थापयामास तु तं जीर्णदेहसुसङ्गतम् ॥ २ ॥
अथोत्थितो महासेनो बाह्यलोकं समीक्ष्य तु ।
भुवं जनांस्तरून् स्रोतोहृदादींश्चापि नूतनान् ॥३॥
बभूव विस्मितोऽत्यन्तं पप्रच्छ मुनिनन्दनम् ।
कतमो वै महाभाग लोकोऽयं मे प्रदर्शितः ॥ ४ ॥
पुरादृष्टादपूर्वोऽयं समाचक्ष्वैतदद्भुतम् ।
इत्यापृष्टो मुनिसुतो महासेनमुवाच ह ॥ ५ ॥
शृणु राजन्नयं लोकः पूर्वं योऽस्माभिरास्थितः ।
स एव चिरकालेन परिणामान्तरं गतः ॥ ६ ॥



अत्राऽध्याये योधपद्यैः स्वप्नजागरयोः समा ।
स्थितिर्दृश्यं भावनैकसिद्धं चेति निरूप्यते ॥ १ ॥

स्थूलेन्द्रियाद्यभावात् सुषुप्ताविव संस्कारमात्रकम् ॥ १ ॥ शैलाद्विनिर्गत्य । तच्छरीरके प्राक् तृणकोटरन्यस्ते । तं राजानम् ॥ २ ॥ नूतनान् परिणामान्तरं गतान् ॥ ३ ॥ शैलान्तरे वेदं लोकान्तरमिति मत्वा पृच्छति—कतम इति । महान् भागो

शैललोकगतानां नो दिनमेकं यदत्ययगात् ।
तावतैवाऽत्र कालेन द्वादशार्बुदवत्सराः ॥ ७ ॥
अतिक्रान्ता अतो लोकस्त्वयं रूपान्तरं गतः ।
भिन्नां व्यवहृतिं पश्य भाषां चापि समन्ततः ॥८॥
एवमेव जनानां तु कालेन भिद्यते स्थितिः ।
एवं मया तु बहुधा दृष्टा भिन्ना जगत्स्थितिः ।
पश्यैवमेष भगवान् समाहितमतिः पिता ।
सोऽयं देशो यत्र पूर्वं त्वया मे संस्तुतः पिता ॥१०॥
एनं पश्य महाशैलं यत्र मे लोक ईक्षितः ।
त्वद्भ्रातुर्वंशपुरुषा अतिक्रान्ताः सहस्रशः ॥ ११ ॥
यत्ते परं वङ्गदेशे सुन्दराख्यं स्थितं पुरा ।
तत्राऽभूत् सम्प्रति वनं व्याप्तं श्वापदमण्डलैः ॥१२॥
त्वद्भ्रातुर्वंशजः सद्यो वीरबाहुरिति श्रुतः ।
मालवेशो विशालाख्ये क्षिप्रातीरे पुरेऽस्ति हि॥१३॥
तद्वंश्योऽपि सुशर्माख्यो द्राविडेष्वभवन्नृपः ।
वर्द्धने नाम नगरे ताम्रपर्णीसरित्तटे ॥ १४ ॥
लोकस्थितिरियं चेत्थं सर्वदा परिवर्त्तते ।
अल्पकालेनैवमेतदभवन्नूतनं जगत् ॥ १५ ॥
इतोऽपि चिरकालेन नगा नद्यो ह्रदा भुवः ।

---

भाग्यं योगसम्पद्यस्य ॥ ४ ॥ ५ ॥ ६ ॥ कुतः परिणामान्तरं मत इति चेदाह—शैलेति ॥ ७ ॥ अतः बहुकालात्ययात् ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ तत्र तत्प्रदेशे ॥ १२ ॥ १३ ॥ १४ ॥ परिवर्त्तते परिणामान्तरं प्राप्नोति ॥ १५ ॥ इतोऽपि द्वाद-

अन्यथाभावमायान्ति एवमेव जगद्गतिः ॥ १६ ॥
गिरयो निम्नतां यान्ति निम्नदेशा महोच्चताम् ।
मरुदेशास्त्वनूपाः स्युः पर्वता वालुकामयाः ॥१७॥
कठिना भूः शिलाप्राया भवेदत्यन्तकोमला ।
कोमला भूरपि भवेत् पाषाणसदृशी क्वचित् ॥१८॥
ऊषरा भूरुर्वरा स्यादुर्वरोषररूपिणी ।
रत्नानि कर्कराः स्युर्वै रत्नात्मानस्तु शर्कराः ॥ १९ ॥
क्षारं जलं स्वादुरसं मधुरं क्षारतां गतम् ।
कदाचिन्नरबाहुल्यं कदाचित पशुमञ्चयम् ॥ २० ॥
कदाचित् कृमिकीटादिप्रचुरं जगदीक्षितम् ।
एवमेतज्जगत् कालभेदात् परिणतं पृथक् ॥२१॥
तस्मादयं पुराऽस्माकं लोक एवेदृशः स्थितः ।
इत्याकर्ण्य मुनिसुतवाक्यं स च महीपतिः ॥२२॥
महासेनोऽत्यन्तशोकाविष्टो मूर्च्छामुपागतः ।
मुनिपुत्रसमाश्वस्तः प्रज्ञामासाद्य भूपतिः ॥ २३ ॥
अत्यन्तशोकसंविष्टो विललाप सुदीनवत् ।
भ्रातरं भ्रातृपुत्रांश्च दारान् स्वात्मन एव च ॥२४॥

---

शार्बुदसङ्ख्यातकालादपि । नगाः पर्वताः ॥ १६ ॥ एतदेवाह–गिरय इति । गिरयोऽत्युच्चपर्वताः । अनूपाः उदकप्रचुराः ॥ १७ ॥ १८ ॥ उर्वरा शस्यवती ॥ १९ ॥ २० ॥ परिणतं भवतीति शेषः ॥ २१ ॥ तस्मात् परिणामान्तरप्राप्तेः ईदृशः अपूर्ववत् ॥ २२ ॥ २३ ॥ स्वात्मनोऽपि पुत्रादीनिति

पुत्रादींश्च पृथक् स्मृत्वा विललापाऽतिदुःखितः ।
अथ तं मोहतो भ्रातृसुखान् शोचन्तमञ्जसा ॥ २५ ॥
मुनिपुत्रो वचः प्राह बुबोधयिषया नृपम् ।
राजंस्त्वं बुद्धिमान्नूनं तत्किमर्थं हि शोचसि ॥
बुद्धिमन्तो हि विफलं जातु कुर्वन्ति कर्म नो ।
अविमृश्य फलं यस्तु कर्म कुर्यात् स बालिशः ॥ २७ ॥
तत्त्वं शोचसि कं ब्रूहि किमर्थं वा हि शोचनम् ।
इत्युक्तः प्राह तं भूपो महासेनोऽतिदुःखितः ॥ २८ ॥
किं न पश्यसि शोकस्य स्थानं मम महामुने ! ॥
सर्वं यस्य हृतं तस्य कारणं पृच्छसीह किम् ॥ २९ ॥
एकस्मिन्नपि शोकः स्याद्धते लोकस्य सर्वथा ।
कुतस्त्वं पृच्छसि पुनः सर्वनाशे ह्युपस्थिते ॥ ३० ॥
इत्युक्तो मुनिपुत्रोऽपि भूयः प्राह हसन्निव ।
राजन् ब्रूहि किमेतत्ते कुलधर्मः सनातनः ॥ ३१ ॥
यच्छोचनमकृत्वा तु प्रत्यवायो महान् भवेत् ।
अथवा शोचिते नष्टं प्राप्यते भूय एव तत् ॥ ३२ ॥

---

सम्बन्धः ॥ २४ ॥ तं राजानम् ॥ २५ ॥ बुबोधयिषया बोधयितुमिच्छया ॥ २६ ॥ शोचितस्य फलं कुतः पृच्छसीति चेदाह-बुद्धिमन्त इति । फलं किञ्चित् स्यादेवेति चेदाह-अविमृश्येति ॥ २७ ॥ तत् तस्मात् ॥ २८ ॥ २९ ॥ शोकस्य कारणं कुतः पृच्छसि मम सर्वनाशप्राप्तौ ॥ ३० ॥ एतत् स्वजने नष्टं शोचितव्यमिति । सनातनः परम्परागतः ॥ ३१ ॥ यस्मात् कुलधर्माकरणे प्रत्यवायो भवेदतः शोचसि किम् ?

राजन् विमृश धैर्येण शोचिते किं फलं भवेत् ।
नष्टेषु बन्धुषु यदि शोचितव्यं तदा शृणु ॥ ३३ ॥
अतीता बन्धवो नष्टाः पितामहमुखाः खलु ।
तत् सर्वदा शोचितव्यं कुतः सर्वं न शोचितम् ॥३४॥
अथ ते बन्धवः कस्य बन्धुत्वं वा कुतस्तव ।
मातापित्रोः स्वस्य वाऽपि पुरीषकृमयो हि ये ॥ ३५ ॥
असङ्ख्याताः स्वदेहोत्था देहसम्बन्धिनोऽपि च ।
न ते स्युर्बन्धवः कस्मात् कुतो वा ते न शोचिताः ३६॥
राजन् विमृश कस्त्वं वै कान् विनष्टान् प्रशोचसि ।
देहस्त्वं देहभिन्नो वा देहः सङ्घातरूपकः ॥ ३७ ॥
सङ्घातस्यैकदेशस्य वा नाशान्नाश उच्यते ।
प्रतिक्षणं त्वेकदेशनाशो देहस्य भावितः ॥ ३८ ॥

---

तत्तु नष्टम् ॥ ३२ ॥ नष्टं न प्राप्यते किं तु शिष्टाचारत्वाच्छो-
चितस्य सफलत्वमिति चेदाह–विमृशेति । लोके शोचद्भिः
किं फलं प्राप्तं यत् मम भवेदिति विमृशेत्यर्थः । फलं नास्त्यपि
तु कुलधर्म एवेतिचेदाह–शृण्विति ॥ ३३ ॥ सर्वदेति । अन-
न्तानां बन्धूनां मृतत्वेन तच्छोचनसम्मितं तवाऽऽयुरेव न भवे-
दिति तात्पर्यम् ॥ ३४ ॥ ते भ्रात्रादयः । तद्बन्धुत्वं तव
कुतो हेतोः । एकगर्भवासादिना भ्रात्रादिबन्धुत्वं ममेति चेदाह–
मातेति ॥ ३५ ॥ ३६ ॥ देह एवाहमिति चेदाह–देहः सङ्घा-
तरूपक इति ॥ ३७ ॥ सङ्घातरूपदेह एवाऽहं नष्टान् देहात्म-
कान् बन्धूनेव शोचामीति चेदाह–सङ्घातस्येति । किं बन्धुनाशः
समग्रसङ्घातनाशे उत तदेकदेशनाशे वा त्वयोच्यते इति विकल्प्य

मूत्रोच्चारश्लेष्मनखकेशादेः सन्ततं च यः ।
सर्वात्मना तु सङ्घातनाशो न हि विभाव्यते ॥३९॥
भ्रात्रादेस्तव देहांशः स्यात् पृथिव्यादिषु स्फुटम् ।
अन्ततो देहगगनमविनाश्यस्ति केवलम् ॥ ४० ॥
न त्वं देहः किं तु देही मद्देह इति भाषसे ।
यथा मद्वस्त्रमित्येवं स देहस्त्वं कथं वद ॥ ४१ ॥
यदि त्वंदेहाभिन्नोऽसि सम्बन्धः कोऽन्यदेहकैः ।

---

द्वितो दूषणमाह–प्रतिक्षणमिति ॥ ३८ ॥ कुतः प्रतिक्षणं नाश इति चेदाह–मूत्रेति । उच्चारो विट् । यतः सन्ततं क्षयो दृश्यते अतः प्रतिक्षणं नाशः सिद्धः । प्रथमपक्षं दूषयति–सर्वेति । सङ्घातस्य सर्वात्मना समग्ररूपेण ॥ ३९ ॥ कुत इति चेदाह–भ्रात्रादेरिति । पृथिव्यादिरूपदेहांशः स्यादेवेति स्फुटं सर्वानुभवसिद्धम् । देहपृथिव्याद्यंशो नष्ट एव स्यादिति चेदाह–अन्तत इति । देहांशपृथिव्यादिनाशाङ्गीकारेऽपि अन्ततः पर्यवसानेऽविनाशिनो गगनस्य केवलस्य शुद्धस्य नाशो दुरुपपाद इत्यर्थः॥४०॥ अथ च तव महानयं व्यामोह इत्याह–न त्वमिति । देहसम्बन्धी देहादन्य एवेत्यर्थः । कुत इति चेदाह–मद्देह इति । यतो मद्देह इति भाषसे । ननु मद्देह इति भाषणेन किं जातमिति चेदाह–यथेति । मद्वस्त्रमित्यादिमत्प्रत्ययविषयवस्त्राद्यं यथा त्वं न भवसि तत्प्रत्ययविषयदेहोऽपि त्वं न । एवं सति कथं स देहस्त्वमित्यर्थः ॥ ४१ ॥ इति श्रुत्वा सत्यमहं देहभिन्नोऽस्मीति वदन्तं प्रत्याह–यदीति। देहभिन्नस्यापि मे भ्रात्रादिदेहैः कुतो न सम्बन्ध इति चेदाह–यथेति । यथा भ्रात्रादिवा-

यथा भ्रात्रादिवासोभिर्नास्ति सम्बन्धलेशकः ॥४२॥
अविशेषात्तच्छरीरैर्विनष्टैस्तैः कथं शुचा ।
मच्छरीरं मदक्षाणि मत्प्राणो मन्मनास्त्विति ॥४३॥
वदन् भवान् किंस्वरूपो वद मे पृच्छते नृप ! ।
एवमुक्तो महासेनो मुहूर्तं सुविचार्य तु ॥ ४४ ॥
अप्राप्य तं मुनेः प्रश्नं प्राह दीनतरस्ततः ।
न जाने भगवन् कोऽहमिति सर्वात्मनाऽप्यहम् ॥४५॥
स्वभावतस्तु शोचामि कारणं तत्र नाविदम् ।
प्रपन्नस्त्वामहं दीनः किमिदं भगवन् वद ॥४६॥
सर्वे शोचन्ति यत् कस्मिन्नपि बन्धौ मृते सति ।

---

सोऽभिस्तव सम्बन्धो नास्ति ॥ ४२ ॥ अविशेषादिति । शरीरवस्त्रयोर्ममत्वस्य तुल्यत्वाद् भ्रात्रादिवस्त्रनाशे शोकाभावाद्वस्त्रतुल्यदेहनाशे कथं शुचा शोक इत्यर्थः । अथ च मच्छरीरमित्यादि वदतः शरीरादिभिन्नस्य ते किं रूपमिति पृच्छति—मच्छरीरमिति । अक्षाणीन्द्रियाणि ॥ ४३ ॥ एवं कस्त्वमित्यादि ॥ ४४ ॥ अन्तं निश्चयम् । दीनतर इति । बन्धुनाशेन दीनः स्वात्मानमविदन्नात्मनाशमपि प्राप्त इव दीनतर इत्यर्थः । ततः प्राहेत्यन्वयः । सर्वात्मना विचारपरोऽप्यहं न जाने ॥४५॥ शोचनेऽपि निमित्तमविदन्नाह—स्वभावत इति । यथा क्षुधातृषादिकं अदृष्टहेतुकमेवं मम शोकोऽपीति भावः । हतबन्धुः मायो हतात्माहं दीनस्त्वां प्रपन्नः । अतः किमिदं शोकादिकं सकारणमुत निष्कारणं वेति वद ॥ ४६ ॥ किमिदमिति सामान्यतः पृष्टमेव विवृणोति—सर्वे इति । कस्मिन्नपि बन्धौ मृते सति सर्वे शोच-

न स्वात्मानं विजानन्ति नाऽन्यं शोचन्ति चैव हि॥४७॥
एतन्मे ब्रूहि भगवन् शिष्याय तव वै स्फुटम्।
इति पृष्टो मुनिसुतो महासेनमथाऽब्रवीत् ॥४८॥
राजन् शृणु महादेव्या मायया मोहिता जनाः।
स्वात्मानमविदित्वैव व्यर्थं शोचन्ति सर्वदा ॥४९॥
यावन्न विदितं स्वात्मसतत्त्वं तावदेव वै।
जनाः शोचन्ति विज्ञाय भूयः शोचन्ति न क्वचित्॥५०॥
यथा निद्रामोहितात्मा स्वमाविज्ञाय शोचति।
ऐन्द्रजालिकमन्त्रोत्थमायया मोहितो नरः ॥५१॥

---

न्तीति यत्तत् कुत इति शेषः ॥ ४७ ॥ एतत् मृतबन्धुशोचनादिनिमित्तम्। तव शिष्याय मे। अथ प्रश्नानन्तरम् ॥४८॥ त्रिपुरामायया मोहितत्वेनाऽऽत्मानमविदित्वा शोचन्तीत्याह—राजन्निति। तथा च शोके आत्माऽज्ञानं हेतुरात्माऽज्ञाने च चिदात्मन ईश्वरस्य मायाख्यं स्वातन्त्र्यमेव हेतुरित्युक्तं भवति। औपनिषदमतेऽपि मूलाज्ञानं भगवच्छक्तिर्माया तदंशत्वात्तद्धेतुकत्वं जीवावरकतूलाज्ञानस्येति ज्ञेयम् ॥ ४९ ॥ एवमज्ञानस्याऽखिलानर्थहेतुत्वमुक्त्वा तन्निवर्तकमात्मविज्ञानमेवेत्याह—यावदिति। सतत्त्वं स्वरूपम्। भूयः पुनः विज्ञानानन्तरं पूर्ववन्न शोचन्तीति भावः ॥ ५० ॥ अत्र दृष्टान्तमाह—यथेति। स्वमात्मानं पर्यङ्के सुप्तमविज्ञाय स्वप्ने क्वचिन्मार्गे स्वाप्नचोराद्यैर्हृतसर्वस्वः शोचति। एवमैन्द्रजालिकमायया मोहितः मोहितमात्मानमज्ञात्वा तन्निर्मितसर्पादिभीत्या शोचतीत्यन्वयः ॥ ५१ ॥

तत्प्रकल्पितसर्पादिभीत्या यद्वद्धि शोचति ।
तथैव मायया मुग्धः स्वमज्ञात्वा प्रशोचति ॥५२॥
यथा स्वप्नात् प्रबुद्धो वा ज्ञातैन्द्रजालिकागमः ।
न शोचति कचित्तत्रान्यान् शुचा युक्तान् हसत्यपि॥५३॥
एवं स्वात्मविदो मायामुक्ताः शोचन्ति न कचित् ।
शोचतस्त्वादृशान् मायामूढान् प्रविहसन्ति च॥५४॥
तत्त्वं विज्ञायात्मतत्त्वं मायामुत्तीर्य दुर्गमाम् ।
जहि शोकं महाबाहो! मोहोत्थं सद्विमर्शनात् ॥५५॥
इत्युक्तः पुनरप्याह महासेनो मुनीश्वरम् ।
भगवन् यस्त्वया प्रोक्तो दृष्टान्तो विषमः स हि ॥५६॥
स्वाप्नो वा मायिको वाऽपि शून्यात्मा भासते परम् ।
अयं जाग्रत्प्रपञ्चस्तु सत्यः सर्वार्थसाधकः ॥ ५७ ॥

---

मुग्धो मूढः स्वमात्मानम् ॥ ५२ ॥ ज्ञानिनः शोको नास्तीत्यत्र दृष्टान्तमाह—यथेति । यथा स्वप्नात् प्रबुद्धः सन् पर्यङ्कस्थमात्मानं विदन् चोराद्यैः सर्वस्वहरणं वितथं मत्वा शोकमवधूय भूयस्तन्निमित्तं न शोचति । अन्यान् तथा शोचतो हसत्यपि । ऐन्द्रजालिकस्यागमो मन्त्रः स मोहको ममेति ज्ञातो येन ॥ ५३ ॥ दार्ष्टान्तिके योजयति—एवमिति ॥ ५४ ॥ तत् तस्मात् शोकस्याऽज्ञानमूलत्वादित्यर्थः । स्वमात्मतत्त्वं विज्ञाय मायामज्ञानरूपेण परिणतां दुर्गमामतिक्रम्य मन्तुमन्यैरशक्यामुत्तीर्य मायाऽऽवरणान्निर्गत्य सत आत्मतत्त्वस्य विमर्शनाद् भूयोऽनुसन्धानाद् जहि ॥ ५५ ॥ दृष्टान्तः स्वप्नेन्द्रजालादिरूपः ॥ ५६ ॥ वैषम्यमेवोपपादयति—स्वाप्न इति । मायिकः ऐन्द्रजालिके दर्शितः

अबाधितः स्थिरश्चापि कथं स्वाप्नसमो भवेत् ।
इत्युक्तः पुनराचख्यौ मुनिपुत्रोऽतिबुद्धिमान् ॥ ५८ ॥
शृणु राजन् ! यत्त्वयोक्तं दृष्टान्तो विषमस्त्विह ।
एष मोहो द्वितीयस्ते स्वप्ने स्वाप्नस्य यादृशः ॥ ५९ ॥
स्वाप्नवृक्षोऽपि तत्काले किं न साधयते हितम् ।
पान्थानां किं न हरति तापं छायाप्रदानतः ॥ ६० ॥
फलाद्यैः स्वाप्नमर्त्यादीन्न तर्पयति किं वद ।
स्वप्ने क्व बाधितः स्वाप्नः क्व स्थिरश्चोपलक्षितः ॥६१॥

---

चोरसर्पादिः । शून्यात्मा असद्रूपः । परं केवलं भास एव तद्भासनं वस्त्वविषयमिति तात्पर्यम् । अयमिति सर्वानुभवसिद्ध इत्यर्थः । सर्वार्थसाधकत्वेन सर्वानुभवसिद्धत्वात् सत्य इत्यर्थः ॥ ५७ ॥ अबाधित इति । सर्वार्थसाधकत्वेनाऽबाधितत्वेन स्थिरत्वेन च सर्वानुभवसिद्धत्वाज्जाग्रत्प्रपञ्चः सत्यः एतद्विपरीतत्वात् स्वाप्नादिप्रपञ्चोऽसत्य इति भावः ॥ ५८ ॥ एष इति । दृष्टान्तो विषम इति । निश्चय इत्यर्थः । द्वितीय इति । दृश्यं द्रष्टुर्विभिन्नं सत्यात्मकमस्तीत्याद्यो मोहः भ्रमः । तत्र दृश्येषु स्वाप्नादिरसत्य इति द्वितीयो भ्रमः । स्वप्नदशायां स्वाप्नपुरुषस्य रज्जौ सर्पभ्रमसदृश इत्यर्थः ॥ ५९ ॥ जाग्रत्प्रपञ्चवत् स्वाप्नस्यापि सर्वार्थसाधकत्वादिकं त्वदुक्तहेतुत्रयमस्तीत्युदाहरति—स्वाप्नेति । तत्काले स्वप्नकाले । यथा जाग्रद्वृक्षो जाग्रति अर्थसाधकोऽबाधितः स्थिरश्चैवं स्वाप्नवृक्षोऽपि च प्रभातकाले सर्वार्थसाधकोऽबाधितः स्थिरश्चेत्यर्थः ।

अखिलं बाधितं जाग्रद्दशायामिति चेच्छृणु ।
जाग्रत्प्रपञ्चोऽपि सर्वः सुषुप्तौ किं न बाधितः ॥६२॥
न बाधितः परदिनेऽप्यनुवृत्तेस्तथेति चेत् ।
स्वाप्नस्यापि परदिने नाऽनुवृत्तिः क्व वा वद ॥ ६३ ॥
नाऽनुवृत्तिर्भाति स्वप्ने इति चेन्नृपते ! शृणु ।
जाग्रत्यपि क्वानुवृत्तिभासो नव्याऽवभासके ॥ ६४ ॥
नव्येऽनुवृत्त्यभानेऽपि भात्यन्यत्रेति चेच्छृणु ।
तथा स्वप्नेऽपि भात्येवाऽनुवृत्तिः स्थिरभासने ॥ ६५ ॥
मृषानुवृत्तिस्तत्रेति चेज्जाग्रत्यपि सा तथा ।
सूक्ष्मबुद्ध्या विमृश तद्वस्तु जाग्रति संस्थितम् ॥६६॥

---

॥ ६० ॥ ६१ ॥ अखिलमिति । स्वाप्नवृक्षाद्यखिलं जाग्रदवभासनाद्बाधितमिति चेज्जाग्रत्प्रपञ्चोऽपि सुषुप्तावभासनाद्बाधित इत्याह–जाग्रत्प्रपञ्चोऽपीति ॥ ६२ ॥ ननु बाधो नाम नाऽनवभासनं किं तूत्तरकालसम्बन्धरूपानुवृत्त्याद्यनुसन्धानहेतुताऽनुवृत्तिसत्त्वान्न बाधते न इत्याशङ्कते–न बाधित इति । तथा स्वप्नवन्न बाधित इति चेदित्यन्वयः । स्वाप्नस्याप्येतत्तुल्यमित्याह–स्वाप्नस्येति ॥ ६३ ॥ स्वाप्नस्याऽनुवृत्तिर्नानुभूयत इति यज्जाग्रत्यपि तुल्यमित्याह–जाग्रतीति । कुत एतदिति चेदसम्भवादित्यभिप्रायेणाह–नव्यावभासके इति । जाग्रति हि प्रतिक्षणं वस्तु नव्यमवभासते । एवं सति कथमनुवृत्तिसम्भव इति भावः ॥ ६४ ॥ ननु क्रियादिक्षणिकभावानां नव्यानामननुवृत्तावपि अन्येषां पृथ्वीगिरिसमुद्रादीनामनुवृत्तिरानिवार्यैवेति चेदेतच्च स्वप्नेऽपि तुल्यमित्याह–तथेति । स्थिरभासने इति । स्थिरं वर्षादि-

देहवृत्तनदीदीपादिकं क्षणविभेदितम् ।
कथं तदनुवृत्तिर्वै भवेदावितथात्मिका ॥ ६७ ॥
अचलानामपि न हि द्वितीयक्षणसङ्गतम् ।
रूपमस्ति सर्वदैव निर्झरैर्भेदितात्मनाम् ॥ ६८ ॥
मूषकैरुपदीकाभिः शूकरैर्निर्झरादिभिः ।
सर्वतस्तु विभिद्यन्ते पर्वताः सर्वदैव हि ॥ ६९ ॥
पर्वता वृद्धिभूसुरूपा अप्येवं क्षणभेदिनः ।
अथ ते सम्प्रवक्ष्यामि पश्य सूक्ष्मधिया नृप! ॥ ७० ॥

---

रूपाचिरकालस्थायिभासनं यस्य स्वप्नस्य । दीर्घस्वप्ने पुत्रकलत्रादीनामनुवृत्तेः सर्वानुभवसिद्धत्वादिति भावः ॥ ६५ ॥ स्वाप्नपुत्रकलत्रादीनामसत्त्वेन तदनुवृत्तिभासनं भ्रमरूपमिति चेत्तुल्यमेतत्तवापि इत्याह-जाग्रतीति । सा अनुवृत्तिः । तथा मपेत्यर्थः । जाग्रत्यप्यनुवृत्तिभासनं भ्रमरूपमेवेति भावः । कथमेतत् प्रत्येयमिति चेदाह-सूक्ष्मेति । अन्धपरम्परागतस्थिरत्वाभिमानवर्जितबुद्ध्येति भावः ॥ ६६ ॥ देहेति । आदिना मेघमण्डलादि । देहादीनां सर्वैः सुस्पष्टं क्षणिकत्वेन ज्ञानानां कथमनुवृत्तिरवितथा भवेदित्यर्थः ॥ ६७ ॥ ननु देहादेरनुवृत्त्यभावेऽपि पर्वतादीनामनुवृत्तिः सम्भवेदिति चेदाह-अचलानामिति । क्षणिकत्वनिर्वाहकविशेषणम् । निर्झरैरिति । अनवरतं निर्झरैर्भिद्यमानानां द्वितीयक्षणसङ्गतं रूपं नाचलानामस्तीत्यर्थः ॥ ६८ ॥ ननु निर्झराणां पर्वतभेदकत्वं न ग्रीष्मादिष्विति चेदाह-मूषकैरित्यादि । उपदीकाः येषां लालापरूपनेन काष्ठादि मृत्तिकात्वमापद्यते ते कृमिविशेषाः । आदिना वनराजादयः ॥ ६९ ॥

परिच्छिन्नाऽनुवृत्तिर्हि समैव स्वप्नजाग्रतोः ।
अपरिच्छिन्नाऽनुवृत्तिः कार्येष्वत्यन्तदुर्लभा ॥ ७१ ॥
अनुवृत्तिः कारणेन रूपेणास्ति हि सर्वदा ।
इति तत्कारणं रूपं पृथिव्यादिमयं किल ॥ ७२ ॥
तच्चाऽनुवृत्तस्वप्नेऽपि पृथिव्यादेर्हि भासनात् ।
अथ स्वप्नस्य बाधो हि जाग्रति ह्यनुभूयते ॥ ७३ ॥



भूर्भूमीति । पर्वतानां बुद्धिभुवो मुख्यानां स्थिरत्वेनाभिमतानां येषां देवलोकादीनां अम्बुधेर्नदीनांचापमिलनाद् भुवो नद्यादिभिर्भेदनाच्च क्षणिकत्वम् । प्रकारान्तरेण जाग्रत्स्वप्नभावयोरनुवृत्तिसाम्यं वक्तुमाह—अथेति । पश्य विचारय ॥ ७० ॥ परिच्छिन्नेति । जाग्रद्भावस्यानुवृत्तिः कालपरिच्छिन्ना न वा ? आद्ये परिच्छिन्नानुवृत्तिः स्वप्नजाग्रतोः समैव । द्वितीये दृश्यत्वेन कार्यात्मना सिद्धजाग्रदवस्थाऽपरिच्छिन्नाऽनुवृत्तिर्दुर्लभैवेत्यर्थः ॥ ७१ ॥ ननु कार्यस्य कारणादत्यन्तभिन्नत्वमारम्भवादाभ्युपगतं तत्र हि मोक्षदोषावकाशो भवेत् । परिणामवादाश्रये तु न कोऽपि दोषः । जाग्रद्भावस्य कार्यरूपेण व्यावृत्तावपि कारणरूपेणाऽनुवृत्तेरित्याशङ्क्य समाधातुमाह—इति चेदिति । पृथिव्यादीति । कारणरूपपृथिव्यादिमयं भौतिकानां महाभूतकार्यत्वात् । यद्वा पृथिव्यादिमयं पृथिव्यादिनिखिलकार्यप्रचुरं प्रधानतत्त्वमित्यर्थः । कार्यमात्रस्य कारणे सूक्ष्मरूपेणाऽवस्थानादिति भावः ॥ ७२ ॥ एवमपि स्वप्नभावानां तुल्यतेत्याह—तच्चेति । कारणरूपमित्यर्थः । स्वप्नेऽपि प्रत्यहं पृथिव्यादिकारणरूपस्य भासमानत्वादनुवृत्तिरस्तीत्याह—अनुवृत्तावपीति । यद्वा पृथिवीति कार्ये-

न जागरस्य बाधस्तु भासते कस्यचित् क्वचित् ।
इति चेच्छृणु वक्ष्यामि बाधो ह्यनवभासनम् ॥ ७४ ॥
सुषुप्तौ सर्वजगतोऽप्यनुभूतं ह्यभासनम् ।
अथ बाधो ह्यप्रमाणदर्शनं चेत्तदा शृणु ॥ ७५ ॥
अप्रमासदृशी नास्ति भ्रान्तानां त्वदृशां खलु ।
ज्ञातविज्ञेयतत्त्वानामप्रामाण्यदृशिः स्फुटा ॥ ७६ ॥

---

पलक्षकम् । तथा च पृथिव्यादिकार्यस्यादिभूतं कारणं यत् प्रधानं तस्य सुखदुःखमोहात्मकगुणत्रयमयस्य स्वप्ने भासमानादिति । प्रकारान्तरेण पुनराशङ्कते—अथेति स्वाप्नभावानां बाधो जाग्रति सर्वैरनुभूयत इत्यर्थः ॥ ७३ ॥ न जागरस्येति । जागरभावस्य बाधस्तु न क्वचिदवस्थायां कस्यचित् प्रमातुर्भासत इत्यर्थः । समाधत्ते–शृण्विति । अनवभासनमिति । अवभासनाऽभाव इत्यर्थः । यद्यपि इदं रजतमित्यादौ नेदं रजतमित्यादिर्यदि विपरीतग्रह एव बाधत इत्युच्यते । तथाऽप्यवभासमानमेव सदिति नियमादनवभासनस्याऽसत्यानियमाच्चाऽनवभासनमेवाऽसत्त्वप्रयोजकमिति बाध इत्युच्यते इति ज्ञेयम् ॥ ७४ ॥ सुषुप्ताविति । अविशेषेण सर्वस्य जगतोऽनवभासनसर्वाऽनुभूतबाधो भवत्येवेत्यर्थः । ननु न ह्यनवभासनं बाधः घटाऽवभासनप्राक्कालिकघटाऽनवभासनस्य बाधत्वप्रसक्तेः । किन्त्वन्यदेवेत्याह—अथेति । अप्रमाणदर्शनमिति । अप्रमाणमिति भावप्रधानो निर्देशः । अप्रामाण्यदर्शनं बाध इत्यर्थः । प्रबुद्धस्य स्वाप्नदर्शने नेदं प्रमाणमिति ज्ञानं सार्वजनीनमेतदेव बाधः । न ह्येवंविधबाधो जाग्रत्यस्तीति भावः ॥ ७५ ॥ यथा हि स्वाप्न-

तस्मादिदं दृश्यजालं स्वाप्नदृश्यसमस्थिति ।
दीर्घकालोऽपि च स्वप्ने भासते निर्विशेषतः ॥ ७७ ॥
तस्मादबाधितो ह्यर्थक्रियाकारी स्थिरोऽपि च ।
स्वाप्नभावस्तेन तुल्यो जाग्रद्भावोऽपि सर्वशः ॥७८॥
यथा जाग्रति जाग्रत्त्वं गृहीतं जागरे स्फुटम् ।
स्वप्नेऽपि जागरत्वं तु गृहीतं तद्वदेव हि ॥ ७९ ॥

---

मातुः स्वाप्नेष्वप्रामाण्यदर्शनं नास्ति, एवमज्ञातज्ञेयतत्त्वानामेव जाग्रत्यप्रामाण्यदर्शनं नास्तीत्याह—अप्रमाणेति । जाग्रत्यप्रमाणदृशिः । "ज्ञेयस्य तु परं तत्त्वं चितिरेव न चेतरत्" । इति नीत्या ज्ञातविज्ञेयतत्त्वानां जाग्रति स्फुटाऽप्रमाणदृशिः ॥ ७६ ॥ तस्मादिति । स्वाप्नभावानामर्थक्रियादिसत्त्वेनाऽवैषम्यादित्यर्थः । ननु जाग्रद्भावो दीर्घकालो भासते न तु स्वाप्न इति चेदाह—दीर्घकाल इति । निर्विशेषत इति । जाग्रत्कालवदविशेषादसत इत्यर्थः ॥ ७७ ॥ तस्मादिति । प्रोक्तदिशा वैषम्याऽभावादित्यर्थः । स्वस्वकालेऽबाधितत्वादेः सत्त्वात् स्वाप्नजाग्रद्भावयोः सर्वांशेन तुल्यत्वमिति भावः ॥ ७८ ॥ नन्वेवमपि जाग्रतो जाग्रत्त्वंवित् नैवं स्वप्नस्य जाग्रत्त्वं भातीत्यस्ति वैषम्यमित्याशङ्क्य परिहरति—यथेति । अथ जाग्रति स्वाप्नाऽनुसन्धानं स्वाप्नस्य स्वाप्नत्वग्रहः नैवं स्वप्ने जागरानुसन्धानादिरित्यस्ति वैषम्यमिति चेत् सत्यम्, आपातदर्शिनामस्त्येव वैषम्यम् । सम्यग्दर्शिनां तु न तल्लेशोऽपि । तथा हि स्वप्ने किमखिलजाग्रदनुसन्धानं नास्ति, उत यत्किञ्चिज्जाग्रदनुसन्धानं नास्तीत्युच्यते । उभयथाऽपि न दोषः । जाग्रत्यपि निखिलस्वप्नानुसन्धानस्य यत्किञ्चित्तदनु-

एवं स्थिते कुतो राजन् विशेषः स्वप्नजाग्रतोः ।
तत्स्वाप्नान्निजबन्धूंस्त्वं न हि शोचसि वै कुतः ॥८०॥
केवलं भावनामात्रात् सत्यता जगति स्थिता ।
शून्यताभावनेनाऽपि शून्यं निष्प्रतिघं भवेत् ॥८१॥
भावना ह्यप्रमाणत्ववैधुर्येण स्थिरीकृता ।
भवेत्तदात्मभावेन सत्यमेतन्महीपते ! ॥ ८२ ॥

---

सन्धानस्य वाऽभावः सर्वानुभवसिद्ध एव । न च यत् किञ्चि-त्स्वप्नानुसन्धानमस्ति जाग्रति नैवं स्वप्ने इति वाच्यम् । अनु-सन्धानं हि स्मृतिः । तथा च पूर्वेदिनेऽनेन मयेत्थं भाषित-मित्यादि जाग्रद्व्यवहारस्मृतेरनुभविकत्वात् । एवं स्वप्ने सेयं जाग्रदासीदिति जागरस्य जाग्रत्त्वग्रहादिकं सर्वमप्रतिहतमेवेति सूक्ष्मविमर्शिभिर्ज्ञेयम् ॥ ७९ ॥ सर्वसाम्ये स्थिते । तत् तस्मात् स्वाप्नजाग्रतोरविशेषात् ॥ ८० ॥ नन्वेवं स्वाप्नजाग्रतोः साम्ये सर्वेषां जगति सत्यताभासनं कुत इति चेदाह–केवलमिति । सत्यं जगदिति भावनानुसन्धानं तन्मात्रात् । तदेकनिमित्ता सत्यतेत्यर्थः । केवलमिति । असत्यमिति । विपरीतभावनान-न्तरितमित्यर्थः । स्थिता दृश्यत इति शेषः । अत एव शून्यत्व-भावने इदमेव जगत् शून्यमभावप्रत्ययविषयं भवेत् । निष्प्रति-घमाकाशवदप्रतिरोधकं च ॥ ८१ ॥ ननु मया सम्प्रति शून्य-त्वेन भाव्यमानमपि जगत् कुतो न शून्यात्मतां यातीत्याशङ्कते–भावनाऽसिद्धा तस्मान्न शून्यात्मतासम्प्राप्तिरिति वक्तुं भाव-नायाः सिद्धप्रकारमाह–भावनेति । भावना इदमीदृगिति

निदर्शनं स्वप्न चेदं यज्जगद् दृष्टमेव ते ।
इमं शैलं परिक्रम्य यौ हि पश्याव सम्प्रति ॥ ८३ ॥
इत्युक्त्वा नृपतिं हस्ते गृहीत्वा परिचक्रमे ।
परिक्रम्य गण्डशैलं राज्ञा सह समेत्य तु ॥ ८४ ॥
पुनः प्राह महासेनं मेधावी मुनिनन्दनः ।
राजन् ! दृष्ट एष शैलः पादगव्यूतिमात्रकः ॥ ८५ ॥
दृष्ट एवास्य गर्भे ते लोकः सुवितत: स्फुटः ।
एष जाग्रदुत स्वप्नः सत्यो मिथ्यात्मकोऽपि वा॥८६॥
शैललोके यद्दिनैकं तदत्र द्वादशाऽर्बुदाः ।

---

प्रत्ययसन्तानः । तस्याः स्थैर्यमेव सिद्धिः । स्थैर्यं चाप्रमाणत्वनिश्चयेनोन्मूलनाभावः । यथा शुक्ताविदं रजतमिति भावने नेदं रजतमितिज्ञानेनाऽप्रमाणत्वेन निश्चिते उन्मूलिता भवति च्छिन्नसन्ताना भवति । सेयं भावना असिद्धा । या तु अप्रामाण्यनिश्चयवैधुर्येण स्थिरीकृता अनुन्मूलिता स्यात्तदा तदात्मभावेन भावितवस्तुरूपेण सा भावनैव भवेत् । भावितं सर्वसाधारणं भायादित्यर्थः । स्वेनानुभूतत्वादाह—सत्यमेतदिति । ॥ ८२ ॥ निदर्शनमुदाहरणम् । ते त्वया । शैलान्तस्तावान् प्रदेशः स्यादिति तत्र शङ्का भवेदत इमं शैलं परिक्रम्य पश्याव इत्याह—इममिति ॥ ८३ ॥ शैलं परिचक्रमे । राज्ञा सह परिक्रम्य । ततः समेत्य स्वस्थानमागत्य ॥ ८४ ॥ मेधावी शिष्यबोधनेऽति कुशलः । गव्यूतिः क्रोशयुगम् ॥ ८५ ॥ स्फुटः जाग्रत्सदृशः । एष शैलाऽवभासः सत्यः मिथ्यात्मक एव वा विवेचयेति शेषः ॥ ८६ ॥ पादगव्यूतिपरिमितशैलेऽनन्तदेशस्य विरुद्ध-

वत्सरास्त्वनुभूतास्ते सत्यासत्ये विवेचय ॥ ८७ ॥
विवेचनं नास्य भवेत् स्वप्नयोर्भिन्नयोरिव ।
तस्मादेतद्विद्धि जगद्भावनामात्रसारकम् ॥ ८८ ॥
अभाव्यमानं चैतत्तु लीयेत क्षणमात्रतः ।
तस्माच्छोकं जहि नृपावेक्ष्य स्वाप्नसमं जगत् ॥८९॥
स्वाप्नचित्रभित्तिभूतं स्वात्मानं संविदात्मकम् ।
दर्पणप्रतिमं मत्वा संस्थितोऽसि यथा तथा ॥ ९० ॥

---

त्वान्नैतद्विवेचयितुं शक्यम्, एवं कालस्यापि विरुद्धत्वादित्याह—शैललोक इति । बहिःपादगव्यूतिमात्रो देशः द्वादशार्बुदमितश्च कालः । अन्तरनन्तरो देशो दिनैकात्मकः कालश्चेति परस्परविरुद्धस्वरूपयोर्मध्ये सत्यासत्ये विवेचय ॥ ८७ ॥ ननु बाह्यविरुद्धमान्तरमसत्यमिति चेदुभयोर्भासनस्य तुल्यत्वेनान्तरविरुद्धं बाह्यमपि असत्यमिति वक्तुं शक्यमिति नैतन्निर्णयः शक्यक्रिय इति सदृष्टान्तमाह—विवेचनमिति । भावनामात्रसारकम् स्वप्नवद् भावनामात्रस्वरूपं न ततोऽधिकं किञ्चिदित्यर्थः ॥ ८८ ॥ यथा अभाव्यमानमेतच्छैलजगत् क्षणमात्रेण लीयते । एवं ब्रह्मणाऽभाव्यमानं बाह्यजगदपीति तात्पर्यम् । तस्मात् भावनामात्रसारत्वाज्जगतः ॥ ८९ ॥ कथं शोकं त्यजामीति चेदाह—स्वाप्नेति । स्वाप्ना ये भावास्ते हि चित्रसदृशाः । चित्रस्य भासमानस्य नासत्यातिरिक्तं स्वरूपमस्तीत्यविवादः । तथा च स्वाप्नचित्रभित्तिभूतं संविदात्मकं स्वात्मानं दर्पणप्रतिमं मत्वा यथा संस्थितोऽसि स्वाप्नबन्धुनाशराज्यलाभे वा यथा

जाग्रच्चित्रदर्पणं चावेत्यात्मानं चिदात्मकम् ।
परमानन्दितस्वान्तो भव शीघ्रं महीपते ! ॥ ९१ ॥

इति श्रीज्ञानखण्डे शैललोकदर्शनं
नाम त्रयोदशोऽध्यायः ॥

---

न शोचसि न प्रहृष्यसि च ॥ ९० ॥ तथाऽवेहीत्यन्वयः । स्वाप्नजाग्रतोरत्यन्तसाम्यात् स्वाप्नभाववज्जाग्रद्भावा अपि चिदात्मदर्पणप्रतिबिम्बरूपा एवेति निश्चित्य स्वाप्नशोकाद्यैरस्पृष्ट इव जाग्रच्छोकाद्यैरस्पृष्टः। अत एव निखिलवासनाप्रहाणमात्रेण निःसारितोदकघटान्तरभिव्यक्ताकाशवत् वासनातिरिक्तस्वान्ताभिव्यक्तात्मानन्दो भवेति भावः ॥ ९१ ॥

इति श्रीतात्पर्यदीपिकायां त्रयोदशोऽध्यायः ॥

# चतुर्दशोऽध्यायः ।



इत्याकर्ण्य मुनिवचो विचार्य शुभया धिया ।
जगत्स्थितिं स्वाप्नसमां ज्ञात्वा शोकं जहौ द्रुतम् ॥१॥
धैर्यमालम्ब्य निःशोको भूयोऽपृच्छन्मुनेः सुतम् ।
मुनिपुत्र ! महाबुद्धे ! त्वं पराऽवरदर्शनः ॥ २ ॥
ततोऽप्यविदितं किञ्चिन्मन्ये स्यादिति लेशतः ।
पृच्छामि यदहं तन्मे कृपया वक्तुमर्हसि ॥ ३ ॥
भावनाप्रभवं ह्येतत् सर्वं वदसि तत् कथम् !
मया भूयो भाविते च न बहिः सर्वथा भवेत् ॥ ४ ॥
त्वया तु भावनासिद्ध्या शैललोकः प्रकल्पितः ।



अत्राऽध्याये साधुपद्यैर्भावनामात्रकं जगत् ।
भावनायाः सिद्धिमपि प्राह तत्त्वान्यपि क्रमात् ॥ १ ॥

जगद्भावनामात्रसारमित्याकर्ण्य शुभया सतर्कयुतया धिया ॥ १ ॥ जगतः स्वाप्नसाम्यज्ञानेऽपि वासनादार्ढ्याद् भूयः शोक आपतति अत आह–धैर्येति । धैर्यं धृतिः । जगतः स्वाप्नतुल्यत्वाभिमानात्यागः । परावरदर्शनः सेन्द्रियातीन्द्रियज्ञः ॥ २ ॥ अत एवाह–तत इति । लेशतोऽप्यविदितमिति योजना ॥ ३ ॥ सर्वं जगत् । तज्जगन्मया भूयो भावितमपि बहिः सर्वसाधारणं सर्वथा न भवेत् तत् कथमिति योजना ॥ ४ ॥ त्वया तु भाव-

अथाऽपि देशः कालश्च युगपद्द्विविधः कथम् ॥ ५ ॥
तत्राऽसत्यमन्यतरत् कतमं तन्ममेरय ।
इति पृष्टो मुनिसुतः प्रवक्तुमुपचक्रमे ॥ ६ ॥
सङ्कल्पो भावना प्रोक्ता सिद्धाऽसिद्धेति सा द्विधा ।
सिद्धिर्विकल्पासम्भेदो(ऽ)विकल्पस्त्वेकनिष्ठितेः ॥७॥



नासिध्या कल्पितः कथंविधा सा भावनासिद्धिरिति पूर्वाऽध्याये सङ्क्षेपेणोक्तस्य सिद्धिहेतोर्विस्तरप्रश्न इति तात्पर्यम् । प्रश्नान्तरम्–अथाऽपीति । युगपदिति । एकस्मिन्नेव काले एक एव देशः कालश्च द्विविधः कथमित्यर्थः ॥ ५ ॥ तत्र दीर्घादीर्घत्वाभ्यां भासमानयोर्मध्ये । यद्यपि पूर्वपूर्वाऽध्याये द्वयोः स्वाप्नतुल्यत्वमुक्तं तथापि जाग्रत्प्रपञ्चे सत्यवासनाविष्टो भूयः पृच्छति–अन्यतरत् सत्यं भवेदिति ॥ ६ क्रमेणोत्तरमाह–सङ्कल्प इति । भावना हि सङ्कल्पः । सङ्कल्पो नामेदमीदृशमित्यादिर्मानस उल्लेखः । सा भावना । तस्याः केयं सिद्धिरिति चेदाह—सिद्धिरिति । इदमीदृगिति सङ्कल्पधारामध्ये नेदमीदृगिति विरुद्धकल्पनया असम्भेदः अयोगः । एवं विकल्पासम्भेदसम्पादनाय विकल्पकारणमाह—विकल्पस्त्विति । एकनिष्ठितेः भवेदिति शेषः । एकत्र निष्ठितेः सत्यत्वग्रहादित्यर्थः । अयं भावः—बाह्यसृष्टौ सत्यत्वग्रहात् स्वमानससृष्टावसत्यत्वविकल्पोदयः यावदेवं विकल्पसम्भेदो भावनायास्तावन्न सिद्धिरिति । यद्वा विकल्पासम्भेदे उपायं वक्तुमाह–अविकल्पस्त्विति । नास्ति विकल्पो यस्य स सङ्कल्प इत्यर्थः । एकनिष्ठितेः एकत्र सङ्कल्पविषयमात्रे नितरां मनसः स्थितेः । सङ्कल्पवि-

ब्रह्मभावनया पश्य जातं जगदिदं ननु ।
एतत् सर्वैः सत्यरूपं भावितं सुदृढत्वतः ॥ ८ ॥
तथा स्वसङ्कल्पभवे नास्ति कस्याऽपि भावना ।
विकल्पसम्भेद एषोऽसिद्धौ तस्माद्विभावना ॥ ९ ॥
भावनायाः सिद्धिरत्र बहुधा संस्थिता भवेत् ।
जन्मना मणिना तद्वदौषधेन च योगतः ॥ १० ॥
तपसा मन्त्रसिद्ध्या च वरेण च भवेन्नृप ।
जन्मना ब्रह्मणः सा वै मणिना यक्षरक्षसाम् ॥ ११ ॥
औषधेन तु देवानां योगिनां योगतो भवेत् ।
तपसा तापसानां सा मान्त्रिकाणां तु मन्त्रतः ॥१२॥

---

षयान्मनसोऽप्रचलनेऽविकल्पः सङ्कल्पो भवेदिति भावः ॥ ७ ॥ यथा वा विकल्पसङ्कल्पात्मकासिद्धभावनाभावितं सर्वसाधारणं भासते । तत्र च यः कश्चिन्नेदं सत्यमित्यविकल्पसङ्कल्पपरो भवेत्तं प्रति तद्दृश्यं तथैव भवेत् । अत एवाह–ब्रह्मेति । ब्रह्मणश्चतुर्मुखस्य सिद्धभावनयेदं जगज्जातम् । एतज्जगत् सर्वैः प्रमातृभिरनेकजन्माभ्यासात् सुदृढत्वतः सत्यरूपं भावितमतः सर्वसाधारणं सत्यत्वेन भासत इति शेषः ॥ ८ ॥ तथा ब्रह्मसृष्ट इव । तत्र स्वसङ्कल्पभवे जगति सत्यत्वभावना न कस्याऽपि । एव तावक एव नेदं सत्यमिति यो विकल्पस्तत्सम्भेदोऽस्ति तस्मात्ते भावना असिद्धा ॥ ९ ॥ कथं भावनासिद्धिर्ब्रह्मादीनामिति चेदाह–भावनाया इति । अत्र जगति ॥१०॥ कस्य कीदृशी भावनासिद्धिरित्येतदाह–जन्मनेति । सा भावनासिद्धिः ॥११॥

विश्वकर्ममुखानां च वरप्राप्त्या हि साऽऽभवत्।
सङ्कल्पितं तथा भाव्यं पूर्वविस्मरणे सति ॥ १३ ॥
स्थिरं तावद्भवत्येव यावत् पूर्वं न हि स्मरेत्।
एवमेव निर्विकल्पभावना यदि सुस्थिरा ॥ १४ ॥
अनिच्छया विकल्पस्य यावत् सम्भेदनं न हि।
तावत् सा भावना सिद्धा साधयेद्वै महाफलम्॥१५॥
सम्भेदात्तु विकल्पेन न सिद्धा तव भावना।

---

औषधेन अमृतेन ॥ १२ ॥ विश्वकर्ममुखा विश्वकर्मप्रभृतयः। भावनासाधनप्रकारमाह—सङ्कल्पितमिति। सङ्कल्पनमित्यर्थः। तथाभाव्यं तथाकर्त्तव्यम्। पूर्वविस्मरणे सति यथा स्थिरं भवेदिति शेषः। सङ्कल्पस्य पूर्वमारम्भः तस्य मया सङ्कल्प इत्थं कृत इत्यस्य विस्मरणे सति सङ्कल्पनं स्थिरं भवेत्। एवं सङ्कल्पनं कर्त्तव्यमिति भावः ॥ १३ ॥ एवं पूर्वविस्मरणमेव भावनासिद्धिसम्पादकमित्याह—स्थिरमिति। पूर्वं न स्मरन् सङ्कल्पमेवानुवर्त्तयेत्। एवं चिराऽभ्यासेन यावत् पूर्वं न स्मरेत् तावद् भावनं स्थिरं भवतीति भावः। एवमेव निरन्तराभ्यासेनैव निर्विकल्पभावना विरुद्धविकल्पासम्भिन्ना भावना यदि सुस्थिरा तदा महाफलं साधयेदिति व्यवहितेन सम्बन्धः ॥ १४ ॥ ननु कियत्कालं सुस्थैर्येण भावना सिद्धा स्यादित्याशङ्क्याह—अनिच्छयेति। विरुद्धविकल्पसम्भेदोऽनिच्छया नैव भवेदिति सुस्थिरा यदा तदा भावना सिद्धेत्यर्थः। अनिच्छया यावद्विकल्पसम्भेदो नास्ति तावत् सिद्धा भावना महाफलं ब्रह्माण्डादिकं सर्वसाधारणं साधयेत् ॥ १५ ॥ तव तु विकल्पसम्भेदाद्भावना न

भावनां साधय क्षिप्रं यदि प्रष्टुं समीहसि ॥ १६ ॥
शृणु राजन् ! देशकालद्वैविध्यं वदतो मम ।
अव्युत्पन्नोऽसि लोकस्य व्यवहारैर्यतस्तव ॥ १७ ॥
एतच्चित्रं भासते वै शृणु सम्यग् ब्रवीमि ते ।
जगद्भावस्वभावोऽयं विविधत्वेन भासनम् ॥ १८ ॥
एक एव हि सर्वस्य प्रकाशो द्विविधः स्थितः ।
दिवान्धानामन्धकार इतरेषां तु भासकः ॥ १९ ॥
जलं मनुष्यपश्वादेः श्वासस्य प्रतिरोधकम् ।
मत्स्यादीनां बहिः श्वासप्रतिरोधो जलेन हि ॥२०॥
अग्निर्दहति मर्त्यादींस्तं भक्षयति तित्तिरिः ।
वह्निर्नश्यति तोयेन स जले चलति क्वचित् ॥ २१ ॥
एवं सर्वे जागतास्तु भावा द्वैरूप्यतः स्थिताः ॥
एवं सेन्द्रियवृत्तान्तास्त्वन्ये केऽपि निरिन्द्रियाः ॥२२॥

---

सिद्धेत्याह–सम्भेदादिति ॥ १६ ॥ एवं प्रथमप्रश्नोत्तरमुक्त्वा द्वितीयप्रश्नोत्तरमाह–शृण्विति । तत्रैतच्चित्रं भासत इति सम्बन्धः ॥ १७ ॥ एतत् एकदैव देशकालयोर्दीर्घत्वं ह्रस्वत्वं च । अत्र कारणं ब्रवीमि । भावस्य विरुद्धत्वेन भासनं स्वभाव एव ॥१८॥ कुत एवं विदितमिति चेद् भूयो दर्शनादिति वक्तुं कांश्चित्ताहृशान् भावानुदाहरति–एक एवेति । द्वैविध्यमेवाह–दिवान्धानामिति ॥ १९ ॥ स्वस्मिन्निमग्नमनुष्यपश्वादेः । बहिः निर्जले देशे ॥ २० ॥ तित्तिरिर्भक्षयति तं न दहति । क्वचित् वडवानलकुण्डादौ ॥ २१ ॥ विरुद्धाद्विरूपतया सर्वे भावाः स्थिताः । तत्र केचित् प्रसिद्धाः । अन्येऽपि अप्रसिद्धाः भूम्यादयो मर्त्यानां

स्वभावतो विरुद्धा वै शतशोऽथ सहस्रशः ।
अत्रोपपत्तिं वक्ष्यामि समाहितमनाः शृणु ॥ २३ ॥
एते हि चाक्षुषा भावाश्चक्षुर्विकृतिमात्रकाः ।
न चाक्षुषादंशतोऽन्यद्दृश्यमस्ति कचिद्बहिः ॥२४॥
यथा पित्तप्रदुष्टाक्षो बहिः पीतं प्रपश्यति ।
यथा तैमिरिकोऽन्यस्तु पश्यत्येकं द्विधा स्थितम् ॥२५॥
एवं विचित्रदुष्टाक्षाः पश्यन्ति विविधं जगत् ।
अस्ति पूर्वसमुद्रस्य मध्ये करण्डकाह्वयः ॥ २६ ॥
द्वीपस्तत्र जना भावान् रक्तान् पश्यन्ति वै सदा ।
एवं रमणकद्वीपे सदा पश्यन्ति वै जनाः ॥ २७ ॥
व्यत्यस्तमूर्ध्वाधरतो निखिलं भावमण्डलम् ॥
एवमन्येषु द्वीपेषु विविधा भावमण्डलम् ॥ २८ ॥
जना नेत्रस्वभावेन पश्यन्ति खलु सर्वदा ।

---

प्रतिरोधकाः पिशाचादीनामप्रतिरोधकाः बुद्धिमद्भिर्ज्ञेयाः । सेन्द्रियाः अपरोक्षाः निरिन्द्रियाः परोक्षाः भावानां विरुद्धस्वभावाः ॥ २२ ॥ निरिन्द्रियाः सेन्द्रियाश्च भावा अन्येऽपि विरुद्धस्वभावाः सन्तीत्याह—स्वभावत इति । कथमेकस्य विरुद्धोभयरूपतेति चेदुपपत्तिपूर्वकं वक्तुमुपक्रमते—अत्रेति ॥ २३ ॥ भावानां बहिरसत्त्वान्नास्ति विरोध इति वदति—एते इति ॥२४॥ अत्र दृष्टान्तः—यथेति । तैमिरिकः तिमिरदोषोपहतनेत्रः ॥२५॥ एवमन्येऽपि दृष्टिदोषवैचित्र्याद्विविधं जगत् पश्यन्तीति सोदाहरणमाह—एवमिति ॥ २६ ॥ सर्वभावान् रक्तान् पश्यन्ति ॥ २७ ॥ व्यत्यस्तमधोमस्तकमूर्ध्वपादमित्यादि ॥ २८ ॥ तन्ने-

तत्र तेषामन्यथा तु दृश्यते यदि कुत्रचित् ॥ २९ ॥
नेत्रं सुसाध्यौषधेन पश्यन्ति प्राग्वदेव हि ।
अतस्तु चक्षुषा यावद् दृश्यते जगतीतले ॥ ३० ॥
तावद्रूपेच्चाक्षुषोंऽशः पीतवत् पीतचक्षुषः ।
एवं घ्राणादीन्द्रियाणामंशा गन्धादयोऽपि हि ॥३१॥
मानसाश्च मनोमात्रास्तथैवाऽखिलजागताः ।
क्रमोऽप्यक्षस्वभावोऽस्थस्ततः किञ्चिद् बहिर्न हि ॥३२॥

---

त्रस्य न स दोषः किं तु स्वभाव एवेत्युपपादयति–तत्रेति । तेषु द्वीपेषु तेषां जनानां यद्यरक्तमव्यत्यस्तं वा दृश्यते तदा तैः स्वनेत्रमौषधैरञ्जनाद्यैरदुष्टं संसाध्य प्राग्वद्रक्तं व्यत्यस्तं च पश्यन्तीत्यर्थः ॥ २९ ॥ ३० ॥ पित्तचक्षुषो यथा दृश्यमानः पीतवर्णश्चाक्षुषोंऽशस्तथा पुरुषस्य चक्षुषा यावद् दृश्यते तावत् सर्वमपि चाक्षुषोंऽश एव । एवं चक्षुर्विषयस्य तदंशत्वं प्रसाध्याऽन्येन्द्रियविषयेऽप्येतदतिदिशति–एवमिति । येनेन्द्रियेण यत् प्रकाशते तस्य तदिन्द्रियांशत्वमिति भावः ॥ ३१ ॥ एवं मनोविषयाणामपि मनोंऽशत्वमित्याह–मानसाश्चेति तथा च देशक्रमस्य कालक्रमस्य क्रियाक्रमस्य च चाक्षुषत्वाच्चक्षुरंशत्वमित्याह–क्रमोऽपीति । क्रमः पौर्वापर्येणावस्थितत्वम् । तथा च द्रव्यक्रमो हि दिक् । प्रयागात् काशी पूर्वेति पूर्वव्यवहारविषयः क्रम एव । एवं क्रियागतः क्रमः कालः । कासांचित् क्रियाणां पौर्वापर्यावस्थितत्वरूपक्रमस्यैव घटिकादिकालव्यवहारविषयत्वं ज्ञेयम् । एवं च यद्यत् देशः कालो वा यथा यथा महत्त्वेनाल्पत्वेन वा भासते स सर्वोऽपि तत्तत्कालिकचाक्षुषोंऽश एव विभिन्न इति

शृणु राजन् ! बहिरिति यल्लोके भाति केवलम् ।
तदाद्यं सर्वजगतां जगच्चित्रस्थभित्तिवत् ॥ ३३ ॥
तस्य बाह्यस्य वक्तव्यमपादानं ध्रुवं ननु ।
शरीरं स्यादपादानं नेतरद्भावितुं क्षमम् ॥ ३४ ॥
तस्याऽपि बहिराभासादुपादानं कथं नु तत् ।
पर्वताद् बहिरित्युक्ते पर्वतो न बहिर्भवेत् ॥ ३५ ॥
यथा घटो भासते हि प्राक् स्तद्वच्छरीरकम् ।
भासकाद् बाहिरित्येवं वक्तुं वाऽपि न सम्भवेत्॥३६॥
दीपसूर्यालोकबहिर्गतान्तं न हि भासनम् ।

---

नैकस्य विरुद्धोभयरूपतादोष इति भावः ॥ ३२ ॥ एवं पित्ता-दिदुष्टाक्षाणां भासमानपित्तादिवर्णदृष्टान्तेन दृश्यं बहिर्नास्तीति प्रसाध्य बहिर्वस्त्वंशसम्भवादपि तन्नास्तीति साधयितुमुपक्रमते-शृण्विति । चित्रस्य भित्तिरिव बहिःपदार्थः जगच्चित्रस्याश्रय-त्वात् कारणत्वाच्चाद्यमित्यर्थः ॥ ३३ ॥ तस्य प्रोक्तस्य । बाह्यस्य बहिःपदार्थस्य ध्रुवमवधिभूतमपादानं वक्तव्यं कस्माद्बहिरित्यपा-दानस्याऽकाङ्क्षितत्वात् । घटादेः शरीरादन्यस्यापि बाह्यत्वेनाऽपादानत्वासम्भवाच्छरीरमेवाऽपादानं स्यादिति सम्भावयति-शरीरमिति ॥ ३४ ॥ शरीरस्यापि बहिष्ठत्वेनाऽभासनान्नापा-दानतत्याह-तस्याऽपीति । अत्र दृष्टान्तः-पर्वतादिति । पर्वतो न बहिष्ठो भवेदित्यर्थः ॥ ३५ ॥ शरीरस्य बहिष्ठत्वे दृष्टान्तमाह-यथे-ति । अथ घटादिशरीरान्तर्भासक आत्मैवापादानमिति शङ्कते-भासकादिति । इत्येवं वा वक्तुमिति योजना ॥ ३६ ॥ ननु यदि भासक अपादानं तर्हि सूर्यालोकाद्बहिर्गतानामन्धकारस्था-

अतस्तु भासकस्यान्तर्भास्यमस्तीति युज्यते ॥ ३७ ॥
भासकं तु न देहादिर्भास्यत्वात् पर्वतादिवत ।
न सर्वथा यत्तु भास्यं भासकं तद्धि युज्यते ॥ ३८ ॥
भासकस्याऽपि भास्यत्वे भासकस्याऽनवस्थितिः ।
स्वस्यैव भासकत्वं च भास्यत्वं न हि युज्यते ॥३९॥
अतस्तु भासकं शुद्धं भासकैकस्वरूपकम् ।
तच्च भारूपमेवेह पूर्णमेकरसात्मकम् ॥ ४० ॥

---

नामभासनामिव भासकाद्बहिष्ठानां भासनमेव न भवेदतो भासकान्तरेव भास्यमभ्युपेयम् । तथा च बहिष्ठानां भासक आत्मा नापादानमित्याह–दीपेत्यादि ॥ ३७ ॥ एतावता बहिःपदार्थस्यापादानानिरूपणाद्दर्पणेऽतिविततगगनाभासवद्भासकान्तरेव बहिःपदार्थावभास इति सिद्धम् । अथ भासकमात्रात्मता भास्यस्येति हेतोश्च भास्यस्य बहिःपदार्थस्य न भासकमपादानमिति वक्तुं भासकस्वरूपं विवेचयति–भासकं त्विति । नन्वस्तु स्थूलोहं पश्यामीत्यनुभवाद्देहस्य भास्यत्वं भासकत्वं चेति चेदाह न सर्वथेति ॥ ॥ ३८ ॥ ननु भास्यस्य भासकत्वे का हानिरिति चेत् यदि एक एव देहः स्वात्मनः स्वयम्बोधो वेदकश्चेति चेदेकस्य कर्तृकर्मत्वविरोधः देहान्तरस्थभास्यो भासकश्चेति स्वस्याभासमानस्य भासकत्वासिद्धेर्भासकदेहानां परम्परया भासकान्तराऽपेक्षणान्मूलक्षतिकरी भासकानवस्थेत्याह–भासकस्येति । न हि युज्यते इति । कर्तृकर्मत्वविरोधादिति शेषः ॥ ३९ ॥ अतः अनवस्थादिदोषात् । शुद्धम् अभास्यमित्यर्थः । एतस्यैव स्पष्टोक्तिर्भासकैकस्वरूपमिति । ननु भासकं भासनाक्रियावत् क्रिया,

तेन व्याप्ता देशकाला भासनात्तस्य पूर्णता ।
अभारूपस्य चाऽभानाद्भारूपैकरसं हि तत् ॥ ४१ ॥

---

क्रिया चानित्यो धर्मः, तथा च भासकत्वस्य कालपरिच्छिन्नत्वात् कथं भासकैकस्वरूपकमिति चेदाह—तच्चेति । भासकमित्यर्थः । भारूपमेवेहेति । लोकवदिह न कर्त्तृक्रिययोर्भेदः । किं तु क्रियात्मक एव कर्त्तेत्यर्थः । दर्पणप्रतिबिम्बवत् कार्यस्य स्वस्वरूपानतिरिक्तत्वेन स्वरूपातिरिक्तक्रियानुपयोग इति तात्पर्यम् । अत एव पूर्णमेकरसात्मकं च । एकरसः वस्त्वन्तरासम्भिन्न आत्मा यस्य ॥ ॥ ४० ॥ तेन भारूपभासकेन कुत इति चेदाह—भासनादिति । सर्वत्र भासनाद्देशकाला व्याप्ता इत्यर्थः । अत एव तस्य पूर्णता । न हि घटपटयोरिव भासकभास्ययोर्भासनम् । किं तु दर्पणप्रतिबिम्बयोरिव । तथा च दर्पणस्य प्रतिबिम्बव्यापकत्वमिव भासकस्य भास्यव्यापकत्वमिति भावः । ननु दर्पणप्रतिबिम्बन्यायेन भास्यभासकानन्यत्वमलौकिकं कुतः कल्प्यत इति चेदाह—अभारूपस्येति । भारूपताद्ात्म्यानापन्नस्येत्यर्थः । अभानादिति । यदि भास्यस्य भारूपभासकानन्यत्वं नोच्यते तदा तस्य भानमेव न स्यादित्यर्थः । अतो भास्यं भारूपैकरसमेव । अयमत्राऽभिप्रायः—यदि भास्यं भारूपबहिर्गतं तर्हि कथं तस्य भासनमुपपद्यते । न हि भासनं नीलादिरिव भास्यधर्मः सर्वदा भासनप्रसक्तेः । मम भासत इति व्यवहारानुपपत्तेश्च । अन्यथा हि मम नील इति व्यवहारोऽपि स्यात् । ननु घटादौ सौरालोकवद्भास्ये भासनमन्यत उपनिपतितम् । तथा चान्यभासनसम्बन्धाद्भास्यभासनमुपपद्यत इति । स्यादेतत् । घटसौरालो-

अन्तर्बहिर्वा यत् किञ्चिद्भारूपोदरसंस्थितम् ।
अतस्तन्नापादानं स्यात् शृङ्गस्येव हि पर्वतः ॥ ४२ ॥
एवंविधं हि भारूपं ग्रस्तसर्वप्रपञ्चकम् ।
भाति स्वतन्त्रतः स्वस्मिन् सर्वत्राऽपि च सर्वदा॥४३॥

---

कयोः संयोग इव भास्यभासकयोस्तृतीयः सम्बन्धो यदि भवेत् । स एव न सम्भवति । तथा हि किं स सम्बन्धो भास्यात्मक उत भासकात्मक आहोस्विदुभयात्मकोऽथवाऽनुभयात्मकः ? भास्यात्मकत्वे तद्भासनाय सम्बन्धान्तराऽपेक्षायामनवस्था । भासकात्मकत्वे भासकस्य भानमात्ररूपत्वेन भासनस्वरूपे भेदाऽनुपपत्तेर्भूयो निरूपितत्वात् स्वस्य सम्बन्धताऽनुपपत्तिः । नोभयात्मकत्वं भासनभास्ययोः चिज्जडात्मत्वेनैकस्य तदुभयरूपताविरोधात् । नाऽप्यनुभयात्मकत्वम् । अपसिद्धान्तात् । अनुभयात्मकं ह्यनिर्वचनीयम् । अनिर्वचनीयवादिनो हि भानात्मकब्रह्मरूपादन्यन्न किञ्चिदभ्युपगच्छन्ति । ते हि पूर्णे ब्रह्मणि साऽदृश्यमनिर्वचनीयमाभासमानमभ्युपगच्छन्तो दृश्यस्य दर्पणप्रतिबिम्बतुल्यताभ्युपगतैव । यदाहुः "विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्" इति । तस्माद्दर्पणे प्रतिबिम्बवद्भानान्तरेव भास्यं भासत इति तज्जगदपि दर्पणैकरसात्मकप्रतिबिम्बवत् भारूपैकरसमिति सिद्धम् ॥ ४१ ॥ अत इति । अन्तःपदार्थो बहिःपदार्थो वा यत् किञ्चिदपि भानान्तर्गतमेवेति हेतोः । तत् भासकमात्मरूपम् । यथा पर्वतान्तर्गतशृङ्गविशेषस्य पर्वतो नापादानं तथेति ॥ ४२ ॥ एवमखिलजगच्चित्रभित्तिभूतबहिःपदार्थापादानासिद्ध्याऽसिद्ध इति भित्त्यसिद्धौ चित्रासिद्धिरिव द्रैश-

एतत् परा चितिः प्रोक्ता त्रिपुरा परमेश्वरी ।
ब्रह्मेत्याहुर्वेदविदो विष्णुं वैष्णवसत्तमाः ॥ ४४ ॥
शिवं शैवोत्तमाः प्राहुः शक्तिं शक्तिपरायणाः ।
एतद्रूपादृते किञ्चिद् यदि ब्रूयुस्तदल्पकम् ॥ ४५ ॥
तया व्याप्तं तु चिच्छक्त्या दर्पणप्रतिबिम्बवत् ।
तस्य भास्यकृतं भासकत्वं च न स्वतः स्थितम् ॥४६॥

---

कालादिभास्यरूपासिद्धावज्ञातरज्जौ सर्पजलधाराभूच्छिद्रादिरूपवद्भासकस्यैव भानात्मनो महदल्पदेशकालादिरूपतेति संसाध्य सम्प्रति गगनान्तर्भासमानभिन्नभाववद्भानान्तरमपि भास्यं भिन्नमेव कुतो न भवेदित्याशङ्कां शमयितुमुपक्रमते–एवंविधमिति । सर्वं स्वोदरे कृत्वा स्थितमित्यर्थः । तदेवाह–ग्रस्तेति । भातीति । सर्वत्र देशे सर्वदा काले स्वतन्त्रतः अन्यानपेक्षं सदैवंविधं भाति ॥४३॥ सर्वेषु शास्त्रेषु एतदेव मुख्यत्वेन प्रतिपादितमित्याह–एतदिति । एतद्भारूपमेव परा चितिः अपरिच्छिन्ना चिच्छक्तिः त्रैपुरे शास्त्रे त्रिपुरा परमेश्वरीत्युच्यते ॥४४॥ शक्तिपरायणाः शाक्ताः । ननु नीलमेघश्यामादिमूर्तिं वैष्णवाद्या मुख्यत्वेनाहुरिति चेदाह–एतदिति । पराचितिरूपं विना यद्यन्यत् किञ्चिन्मुख्यं ब्रूयुस्तर्हि तदल्पकं कालदेशपरिच्छिन्नमेव भवेत् । तस्मात्त्रिपुरादिनाम्नाप्येतदेव मुख्यमिति वक्तव्यमिति भावः ॥ ४५ ॥ ननु ग्रस्तसर्वप्रपञ्चकमित्युक्त्या जगद्व्याप्तिराकाशस्यैव स्यादिति चेन्नेत्याह–तयेति । ननु सर्वस्य जगतः स्वस्वरूपाव्यतिरिक्तत्वेऽपि चितेर्भासकत्वं घटादेर्नीलादिवद्भिन्न एव धर्मः स्यात् । तथा च भारूपस्य चाभानमिति भासकत्व-

भास्यं तु भाननिमग्नमादर्शे नगरादिवत् ।
दर्पणे नगरं यद्वद्दर्पणान्नातिरिच्यते ॥ ४७ ॥
तथा चिति जगद्भाति यत्तन्नैवातिरिच्यते ।
दर्पणात्मनि सम्पूर्णे निबिडे चैकरूपिणि ॥ ४८ ॥
यथा हि भिन्नं नगरं सर्वथा नोपपद्यते ।
तथा पूर्णेऽस्तु निबिडे चैकरूपे चिदात्मनि ॥ ४९ ॥

---

स्याभानप्रसक्तिरिति चेदाह—तस्येति । भानस्येत्यर्थः । तस्य भास्यकृतत्वेनौपाधिकत्वात् स्फटिकस्थजपाकुसुमलौहित्यवत् तदपि प्रतिबिम्बात्मकमेवेति भावः ॥ ४६ ॥ तस्मादादर्शे नगरादिवत् सर्वं भास्यं भाननिमग्नमेवेत्याह—भास्यं त्विति । दर्पणे भासमाननगरादेर्दर्पणाऽनन्यत्ववच्चिति भासमानस्य प्रपञ्चस्य चिदव्यतिरिक्तत्वमित्याह—दर्पण इति॥४७॥तथा प्रतिबिम्बत्वेन चितिवज्जगद्भातीत्यन्वयः । ननु दर्पणप्रतिबिम्बवदेव चिति जगद्भासनमिति कोऽयं निर्बन्धः गगने जगद्भासनवदेव कुतो नाभ्युपेयते इति चेदाह—दर्पणेति । सम्पूर्णे छिद्ररहिते । निबिडे अशिथिलावयवे, एकरूपिणि वस्त्वन्तरासम्भिन्ने सच्छिद्रे हि पृष्ठतः स्थितं भासते । शिथिलावयवे ह्यवयवसन्धिसन्निविष्टं वस्त्वन्तरं भासते । वस्तुसमुदाये च समुदितं विचित्रं भासते । दर्पणस्य त्वनैवंविधत्वाद्दर्पणाद्भिन्नस्य तत्र भानं नोपपद्यते इति भावः ॥४८॥ यथा नोपपद्यते तथोपपत्तिं न समश्नुत इत्यन्वयः । ननु दर्पणे न प्रतिबिम्ब इति कश्चन विशेषः किं तु दर्पणप्रतिरुद्धैः परावृत्तैः चक्षुषरश्मिभिर्बिम्बस्यैव ग्रहणमिति चेन्न । भित्तिप्रतिरुद्धैरपि तैर्मुखग्रहणप्रसङ्गात् । न च नैर्मल्यं हि प्रतिरोधे

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1–12

No. 2—The Advaita Chintāmaṇi, by Rangoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1–12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2–0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–4

No. 6—(Pārt I)–The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–12

No. 6–(Part II)—Ditto Ditto Rs. 0–12

No. 7–(Part I)–Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–4

No 7—( Part II ) Ditto Rs. 1–8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya, Rs. 0–10–6

No. 9—(Part 1)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0–15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.Rs.1-2

No. 10-(Part-II)-The Siddhāntaratna by Baladeva Vidyābhūṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by Saṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, ( Jñāna Khaṇḍa)
Ed.with a Prefatory Note by Gopinath Kaviraj,M.A. Rs.0-14

No. 15-( Part-II )-The Tripurārahasya ( Jñānakhaṇḍa ) Ed. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-14

No. 18-(Part I)-The Gorakṣa siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjivanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Introduction etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A.

THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgānātha Jhā.

(b) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nathKaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 5

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3) Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā-nātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj,

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools by G.L. Sinha. Rs. 5

Vol. V.—( In progress )

To be had of
The Superintendent, Government Press,
ALLAHABAD, U. P. (INDIA).

